न्ले लात्पद द्वितीयात्प्रथमात्परकेऽथ विपययुजि चरमे ॥ पष्ठो लाद्येषु त्रिपु पादो भवति भवति तु पथ्या ॥ ७ ॥ विपुला तु यान्यथा पादभाक् जकारौ द्वितीयकचतुर्थौ ॥ गुरुमध्यगौ भवेतां भवेत्तदा सर्वतश्चपला ॥ ८ ॥ अर्धे यदग्रिमे लक्षणं भवेत्केवले तु चपलायाः ॥ मुखचपलासौ गदिता शेपे पूर्वोक्तलक्षणिका ॥ ९ ॥ पूर्वार्धे पूर्वसमं; चपलाया लक्षणं

प्राप्ताया प्रतिप्रसवार्थमिद वचनम् । वाशब्दः पक्षान्तर द्योतयति । नलघुकौ वा पक्षे पष्ठो गणो वेदितव्यः। प्रस्तारः ॥ ६ ॥ पष्ठ इति वर्तते न्ले चतुर्लघौ पष्ठे गणे 'न्ले लात्पद द्वितीयात्प्रथमात्परकेथविपय' इत्यस्मिन् 'वि' इत्यय यो द्वितीयो लघुः तस्मात्पदमारम्भणीयम् । न्ले लात्पदमिति वर्तते । अथानन्तर परके सप्तमे गणे 'युजि-च्चर' इत्यस्मिन् न्ले 'यु' इत्येतस्माल्लघोः प्रथमात्पदमारम्भणीयम् । न्ले लात्पद प्रथमादिति वर्तते । चरमे द्वितीयार्धे विपयाः शब्द(+स्पर्श)रूपरसगन्धभेदेन पञ्च योजन युक् तैर्युक् सबन्धो यस्य तस्मिन् न्ले लघुचतुष्टयरूपे पञ्चमे गणे 'पष्ठो लाद्येपु त्रि (+पु) पादो भवति भ' एतस्मिन् लात्प्रथमाद्भकारात्पदमारम्भणीयम् । प्रथमार्धवत् द्वितीयेऽप्यर्धे पष्ठस्य गणस्य द्विरूपताया प्राप्तायामयमपवादः । चरमे द्वितीयेऽर्धे पष्ठो गणो लघुरेव भवति रूपान्तरेण नावतिष्ठत इत्यर्थः । प्रथमेपु त्रिपु गणेपु द्वयोरप्यर्धयोः[६] 'न्ले लात्पद द्वितीयात्' तथा 'पष्ठो लाद्येपु त्रिपु' इत्येतेपु गणेपु पादो यतिर्भवति । पथ्या नाम सा आर्या भवति । तु शब्दः पुनरर्थे ॥ ७ ॥ अन्यथा याँ पादभाक्सा पुनः विपुला नाम आर्या । 'अन्यथा' इत्यस्यायमर्थः । प्रथम एवार्धे प्रथमेपु त्रिपु गणेपु पादो द्वितीयस्मिन्नेव वार्धे यो[८] वापि भूते (?) लक्षणे प्रथमार्धे त्रिपु गणेपु न विरामः कृतः । द्वितीये तु 'गुरुमध्यगौ भवेताम्' इत्यत्र कृतः । गुर्वोर्मध्य गुरुमध्य तद्गच्छत इति गुरुमध्यगौ । [जकारौ द्वितीयकचतुर्थौ यदा गुरुमध्यगौ भवेता तदा सर्वतश्चपला सर्वचपला नाम आर्याभेदो भवेत् ।] चपलायाः प्रस्तारः ॥ ८ ॥ चपलाया लक्षणं गुरुमध्यगौ द्वितीयकचतुर्थौ गणौ जकारावित्येवरूप यस्या अग्रिमे केवले प्रथम एवार्धे भवेदसौ मुखचपला नाम आर्या गदिता । शेपे द्वितीये पूर्वोक्त यत्सामा-

१ लोभेन्त्ये D. v. 2, २ श्चपला A; words from भवेता to चपला in v. 8 bare dropped in C and also in com. ३ Hereafter garphical representation is dropped by me; ४ विवलेत० A; B, ५ द्विरूपाया A; B, ६ प्यर्धेये B; ७ या dropped in A; ८ यो चापिभूते A, योर्चापिभूते B; ९ Portion within brackets is conjectural. १० मुदिताशेपेचपला A; B.

निरवशेषम् । पाश्चात्यमर्धमाश्रित्य वर्तते जघनचपलायाः[1] ॥ १० ॥
आर्याया[2] पूर्वार्धे यदुक्तमत्रादितो[3] मया लक्ष्म । गीतिं गीतिविधिविदो
वदन्ति संवीक्ष्य तदितरत्रापि ॥ ११ ॥ आर्याद्वितीयदलभवलक्ष्म
प्रतिनियतमवगम्य । उभयत्राप्युपगीतिं वदन्ति येत्यंशकैर्गदितैः[4] ॥ १२ ॥
आहितविपर्ययार्या शकल[5]द्वयजनितरूपा या । उद्गीतिः सोद्गीता
नानायत्यंशभेदतस्तद्वत् ॥ १३ ॥ गुर्वन्ताष्टमगणभागार्या[6] पूर्वार्धसदृशशकं[7]-
लद्वितया । आर्यैरार्यागीतिर्गीता[8] संगीतगीतिभिर्गीतिविधौ[9] ॥ १४ ॥

न्यलक्षण तद्विद्यते यस्याः सा तथा । मुखचपला इत्यस्या अभिधान मुखे प्रारम्भे
द्वितीयचतुर्थगणयोर्गुरुमध्यगयोर्[10]जकारस्य सनिधानात् । मुखचपलायाः प्रस्तारः ॥९॥
चपलायाः[11] निरवशेष सकल लक्षण जघनचपलायाः पाश्चात्य द्वितीय ( +मर्ध- )
माश्रित्य वर्तते । तत्र द्वितीयचतुर्थौ गणौ गुरुमध्यगौ जकारौ भवत इत्यर्थः । पूर्वार्धे
पूर्वेण 'द्व्यन्तान्तरादि' इत्यनेन सामान्यलक्षणेन तुल्य अर्धम् । प्रस्तारः ॥ १० ॥
मया छन्दस्कृता[12] आदितः प्राक् अत्र आर्यायाः पूर्वार्धे यल्लक्ष्म लक्षण षष्ठस्य
गणस्य द्विरूपत्व तदितरत्रापि द्वितीयेऽप्यर्धे सवीक्ष्य निरीक्ष्य[13] गीतिविधिज्ञाः
गीत्युपगीत्युद्गीत्यार्यागीतिविधानाभिगीतिनो गीतिमार्याविशेष वदन्ति ।
प्रस्तारः ॥ ११ ॥ आर्यायाः द्वितीयार्धे भव यल्लक्ष्म 'षष्ठो ल्' इति तत् उभय-
त्रापि द्वयोरप्यर्धयोरवगम्य निरीक्ष्य[14] उपगीतिं वदन्ति । कीदृश तत् । प्रतिनियत
द्वितीय एवार्धे नियोजितम् । आद्येषु त्रिषु पादः इत्यादिकाभिर्यतिभिः सप्तभिर्गणैः
द्व्यन्तान्तरादिगुरुरूपैः पूर्वमभिहितैः करणभूतैः ॥ प्रस्तारः ॥ १२ ॥ या एव
प्रकारा सा उद्गीतिरुद्गीता कीर्तिता । कासौ । आह । आहितेत्यादि । आहित
उत्पादितो विपर्ययो द्वितीयार्ध प्रथमे कृत प्रथमार्धे च[15] द्वितीयीकृत यस्य
तथाविध यत्तदार्या[16]शकलद्वय तेन जनित सपादित रूप यस्याः सा । तथा तद्व-
दिति उपगीतिवत् नानायत्यशभेदात् ॥ प्रस्तारः ॥ १३ ॥ पापेभ्य आरात् याताः
दूरादपगताः आर्याः तैरार्यैरेवविधा आर्यागीतिर्गीता । किंविशिष्टा । प्रागुक्ताभ्यः
आर्याभ्यः अस्या विशेषमाह । गुरुरन्तो यस्य तथाविधमष्टम गणं भजतीति ।

१ चपलाया A, २ आर्याया A, ३ मयादितो० A, मितरत्र प्रथमतो D. v 49,
४ जत्यं० B, C, ५ सकलद्वय A, B, C, ६ गुर्वन्तामष्टम A, ७ सकल A; ८ आर्यैरार्या०A;
९ समीति A, सङ्गीत B; C, १० मध्यमयो० A, मगयो० B, ११ dropped in A; १२
छन्दस्मृता A, B, १३ नियीष्य A, नियोज्य B; 13 16 निरीष्य=निरीक्ष्य ? १४ नियोध्य
A, नियोज्य B, १५ द्वितीयाकृत A; द्वितीयो० B. १६ सकल A; B.

वैतालीयं र्लौ नैधनाः । षड्युक्पादोऽष्टौ समेश्च लः ॥ न समोऽत्र परेण युज्यते । नेताः षट् च निरन्तरा युजोः ॥ १५ ॥ यौवन्ते शेषपूर्वसाम्याद् । औपच्छन्दसकं वदन्ति सन्तः ॥१६॥ आपातलिका भवतीयं । तन्निधने भवतो भपरौ गौ ॥ १७ ॥ पूर्वः सह पञ्चमेन चेत् । प्राच्यवृत्तिरयुजौ तु

भजो ण्विः । तथा आर्यापूर्वार्धेन पठ्यस्य गणस्योभयरूपत्वेन सदृशं तुल्यं शकल-द्वितयं यस्याः सा तथा । किंविशिष्टैर्गणैः । गीतिविधौ आर्यागीतिकृतौ सगीता कीर्तिता गीतिः यस्मादुक्तैस्तस्या हि द्वितीयमर्धं प्रथमार्धसदृशमिति मनसि कृत्वोक्तम् । गीतिविधौ स(+गीत)गीतिभिरिति ॥ प्रस्तारः ॥ १४ ॥ आर्या-लक्षणाना विवृतिः समाप्ता ॥ एवमार्यालक्षणान्युक्त्वा सम्प्रति वैतालीयलक्षणान्या-चष्टे ॥ वैतालीय नाम मात्रावृत्तं भवति । किं तद्वैतालीयम् । यस्यायुक् प्रथम-तृतीयाख्यः पादः षड्ः षण्मात्रात्मकः समश्च द्वितीयचतुर्थात्मकाख्यः पादोऽष्ट-मात्रात्मकः । लशब्दो मात्रोपलक्षणार्थः । किंविशिष्टाः । र्लौ नैधनाः । रश्च लुच गुच ते र्लौः । निधने अवसाने भवा नैधनाः र्लौ नैधना यासां तास्तथोक्ताः । अत्र वैतालीये समो द्वितीयादिर्मात्रात्मकः परेण तृतीयादिना न युज्यते मिश्रीभाव नोपयाति । युजोः द्वितीयचतुर्थयोः पादयोरेताः षण्मात्रा निरन्तरा व्यवधानशून्याः लघुरूपा एव न कार्या इत्यर्थः ॥ प्रस्तारः ॥ १५ ॥ साधवः औपच्छन्दसकं नाम वैतालीयभेदं वदन्ति रेफयकारावन्ते यदि । अवशिष्टं कीदृगित्याह । शेषपूर्वसा-म्यादिति । पूर्वं 'षड्युक्पादोऽष्टौ समेश्च लः' इति अनेन साम्यं पूर्वसाम्यं शेषे-स्यावशिष्टस्य पूर्वसाम्यं शेषपूर्वसाम्यं तस्मात् ॥ प्रस्तारः ॥ १६ ॥ शेषपूर्वसा-म्यादिति वर्तते । तेषां चैं युगयुजां यथाक्रमं द्वितीयचतुर्थप्रथमतृतीयरूपाणां पादानां निधनेऽवसाने भकारात्परौ गुरू भवतः । इयमापातलिका नाम वैतालीय-भेदो भवति । कस्मात् । शेषपूर्वसाम्यात् ॥ प्रस्तारः ॥ १७ ॥ 'न समोऽत्र परेण युज्यते' इति अस्यायमपवादः 'पूर्वः सह पञ्चमेन चेत्' इति । पूर्वश्चतुर्थो मात्रात्मकः पञ्चमेन सह यदि सम्बन्धमुपैति प्राच्यवृत्तिर्नाम वैतालीयभेदो भवति । अयुजौ तु प्रथमतृतीयपादौ पूर्ववत् वैतालीयवत् भवतः । तत्र हि न समः परेण

१ पादेऽष्टौ A, B; C; but D. v. 54 agrees with com. whose reading is adopted in the text. समे च लः A; D. v. 54; २ योवातिशेषपूर्वसा० A; ३ औपच्छन्दसिकं D. v. 60; ४ सकल A; B, ५ धान्यसन्त्या A; धान्यसवन्या B; ६ सिष्टं A; B; ७ गीदृगि० B; ८ श्चमश्च A; B; ९ सेप A; B; १० सिष्ट A; B; ११ जा A; B; १२ वशाने A; B.

पूर्ववत्[1] ॥ १८ ॥ उदीच्यवृत्तिस्त्वयुग्मयोः पूर्वश्चेल्लघुकस्तृतीययुक्[2] ॥ १९ ॥ यथास्वमाभ्यामयुग्मयोः[3] । युग्मयोश्च भवति प्रवृत्तकम् ॥ २० ॥ अस्य युग्मजनितापरान्तिका ॥ २१ ॥ तथौजजा चारुहासिनी ॥ २२ ॥ द्विकविहृतवसुलघुरचलधृतिरिह[4] ॥ २३ ॥ मात्रासमकं ल्नवमं गन्तम्[5] ॥ २४ ॥ अष्टाभ्यो गाथा[6] उपचित्रा ॥२५॥ जो न्लौ[7] च तोयधे[8]र्विश्लोकः ॥२६॥

युज्यते । प्रस्तारः ॥ १८ ॥ अयुग्मयोः प्रथमतृतीययोः पूर्वो द्वितीयः एकमात्रः तृतीयेन योग सबन्धमुपैति चेत् भवति उदीच्यवृत्तिर्नाम वैतालीयभेदः । प्रस्तारः ॥ १९ ॥ आभ्या प्राच्यवृत्त्युदीच्यवृत्तिभ्या करणभूताभ्या यथास्व पूर्वः पञ्चमयुगिति युग्मयोर्द्वि(+ती)यचतुर्थयो. द्वितीयस्तृतीययुगितिचायुग्मयोः प्रथमतृतीययोः पादयोः सतोः प्रवृत्तकाख्यो वैतालीयभेदो भवति । प्रस्तारः ॥ २० ॥ अस्य प्रवृत्तकस्य युग्माभ्या द्वितीयचतुर्थाभ्या पदाभ्या जनिता अपरान्तिका[9] नाम वैतालीयभेदो[10] भवति । चतुर्ष्वपि पादेपु चतुर्थोऽस्याः पञ्चमेन युज्यत इत्यर्थः । प्रस्तारः ॥ २१ ॥ तथा तेनैव प्रकारेण प्रवृत्तकस्य ओजाभ्या प्रथमतृतीयाभ्या पादाभ्या जाता चारुहासिनी[11] नाम वैतालीयभेदो भवति । पादचतुष्टये[12]ऽप्यस्याः द्वितीयस्तृ[13]तीयेन युज्यत इत्यर्थः । प्रस्तारः ॥ २२ ॥ वैतालीयविवृतिः समाप्ता ॥ द्विकेन विहृता[14] द्विकविहृताः द्विगुणिताः इत्यर्थः । वसुसख्याका[15] अष्टौ लघवो वसुलघवः द्विकविहृता वसुलघवो यस्यास्तादृगिह छन्दःशास्त्रेऽचलधृ[16]तिर्नाम वृत्तजातिर्भवति । प्रस्तारः ॥ २३ ॥ द्विकविह(+त) वसुलघुरिति वर्तते । मात्रासमक नाम वृत्त भवति । किंविशिष्ट ल्नवमं लघुरेव नवमो यस्य तत्तथा । अचलधृतौ[17] गुरुरूपा लघवः । इत आरभ्य लघुशब्दो मात्रालक्षणार्थोऽनङ्गक्रीडादीन्वर्जयित्वा द्रष्टव्यः । तथा गन्त गुरुरेवान्तो यस्य[18] तत्तथा । प्रस्तारः ॥ २४ ॥ मात्रासमकस्य भेदानुपदर्शयति[19] । अष्टाभ्यो मात्राभ्यः पर मात्राः गुर्वादिकाः यदि भवन्ति उपचित्रं[20]नाम वृत्त भवति । कीदृशी । द्विकाविहृत[21]वसुलघुः । प्रस्तारः ॥ २५ ॥ तोयाधिसख्याभ्यः चतुर्भ्यो मात्राभ्यः परो जकारो वा नलघुकौ

१ पूर्वस् C, २ पूर्वश्च लघुक A, ३ यथास्वमाभ्यामयुग्मयोश्च० A; ४ विहित A, ५ गतम् A; ६ गाथावुप० A, मात्रा उप० C, गोल्यावुपचित्रा Narayana on VR. 2. 36, ७ ग्लौ C, ८ तोयधिर्वि० A. ९ अपरान्तका A, १० लीयदो B, ११ हासनी A; १२ पदे चतुष्टये B; १३ द्वितीय तृ० A; १४ विहिता A, B, १५ साख्याका A; B, १६ धृतिः A, B, १७ धृतौ A; १८ यस्या A; B; १९ नुदर्शयति A; २० चित्रमान A., चित्रामान B; २१ विहित B.

तद्द्वितयाद्वानवासिकायाः ॥ २७ ॥ सैश्च द्वितयादुदधेश्चित्रा ॥ २८ ॥

समनन्तरनिगदितलक्षणभाङ् मात्रासमादि-पादाकुलकम् ॥

अविदितवृत्तपरिमापरिगतं मुनिनाभ्यधायि पादाकुलकम् ॥ २९ ॥

द्विघ्नान्यष्टौ दीर्घाण्यर्धे यस्याः सोक्तानङ्गक्रीडा ॥

शैकलमपरमपि सलिलनिधिगुणितवसुलघुकसुपरिघटितपदविसृति ॥३०॥

वा विश्लोको नाम वृत्त भवति । कीदृशः । द्विकाविहतवसुलघुः । प्रस्तारः ॥ २६ ॥ तद् द्वितयादुदधिद्वितयादष्टाभ्यो मात्राभ्यः परो जकारो नलघुकौ वा वानवासिकायाः भवतः । किंभूतायाः । द्विकविहतवसुलघोः । प्रस्तारः ॥२७॥ उदधेर्द्वितयादष्टाभ्यो मात्राभ्यः परः सकारश्चकारात् जो न्लौ (+ वा) यदि भवन्ति चित्रानाम वृत्त भवति । कीदृशी द्विकाविहतवसुलघुः । प्रस्तारः ॥ २८ ॥ मुनिना भगवता पिङ्गलेन एवविध पादाकुलक नाम वृत्तमभ्यध्यायि उक्तम् । किंभूतम् । समनन्तरेत्यादि । समनन्तरमिदानीमेव निगादितमुक्तं लक्षणं ये भजान्ति मात्रासमकादीना पादास्तेनाकुल व्याप्त अतएव अविदितेत्यादि । परिमाणं परिमा । वृत्तस्य परिमा वृत्तपरिमा । व्याकुलत्वाज्झगिति बुद्धावनुपारोपादविदिता अज्ञाता या सा वृत्तपरिमा तया परिगत व्याप्तम् । अत्र सग्रहश्लोकाः ।

चित्रा मात्रासमा वाद्यो; विश्लोको बोधचित्रका ।
द्वितीयोऽपि; ततो मात्रासमक वानवाषिका ॥ १ ॥
उपचित्रा च विश्लोकश्चतुर्थैर्हि: कृतञ्किल ।
इति पादाकुलाख्यत्वमब्रवीदस्य पिङ्गलः ॥ २ ॥
दृष्टोदाहरण छन्दस्कारोक्तमिति कीर्तितम् ।
नियमात्तत्तु; दृश्यन्ते बहुधो ह्यस्य भिदो यतः ॥ ३ ॥

इति । प्रस्तारः ॥ २९ ॥ अनङ्गक्रीडा उक्ता । कां इत्याह । यस्या अर्धे अष्टौ दीर्घाणि । किंभूतानि । द्विघ्नानि । द्वाभ्या हन्यन्ते गुण्यन्ते इति । घञर्थे कविधानमिति कप्रत्ययः । द्विघ्नानि । षोडश गुरूणीत्यर्थः । अपरमपि शैकलमर्धे कीदृगित्याह । सलिनिधीत्यादि । सलिलनिधिगुणिताश्चतु-

१ सश्च द्वितयसुदधिस्तु चित्रा A; २ विघ्ना० A; ३ दीर्घान्यर्धे A; ४ सकल० A; B, C; ५ उदधिर्द्वि० A; B; ६ रोतादविदिति A; B; ७ या A ;B; ८ स्वरूणि B; ९ सकल० A; B;

गुरुकनिधननवकसहितकृतिलघुविरचितशकलभृदतिरुचिरा ।
गीत्यार्याचलधृतिरहिपतेः शिखा-चूलिके त्वनन्तरजे ॥ ३१ ॥
लोक्षै (+र) गुरुलघुरहिता गुरवो वर्णा दले गुरवः ॥ ३२ ॥
इति जयदेवच्छन्दसि चतुर्थोऽध्यायः ॥

---

गुणिताः ये वसुसंख्याका अष्टौ लघवस्तैः सुपरिघटिता सुष्ठु योजिता पदविसृतिः पदप्रसरणं यस्याः सा तथोक्ता । एव द्वितीयमर्धे द्वात्रिंशता लघुभिः संपद्यते । प्रस्तारः ॥ ३० ॥ अतिरुचिरा नाम वृत्त भवति । किंविशिष्टा । गुरुकनिधने-त्यादि । गुरुको निधन यस्य तथाविधो यो नवकस्तेन सहिताः कृतिरिति विंशति-संख्यात्मका ये लघवस्तैर्विरचितं शकलमर्धं बिभर्तीति । क्विप् । सा तथोक्ता । अष्टाविंशत्या लघुभिरन्त्येन गुरुणा च विरचित दल बिभर्तीत्यर्थः । जयदेवस्य या अचलधृत्यनङ्गक्रीडातिरुचिरास्ता यथाक्रममहिपतेर्भगवतः पिङ्गलस्य गीत्या-र्याशिखाचूलिका मताः । प्रस्तारः ॥ ३१ ॥ (+अक्षः )रै [10]रहिता लो मात्रा गुरवो भवन्ति । गुरुरहितास्तु वर्णा भवन्ति । लघुरहिताः पुनर्मात्राः दले अर्धे सति गुरवो भवन्ति । पथ्यार्यायाः इद द्वितीयमर्धम् । मात्राः सप्तविंशतिः अक्ष-राणि च विंशतिस्तै रहिताः शून्याः मात्राः सप्तविंशतिसंख्याः सप्त गुरवो भवन्ति । सप्तभिर्गुरुभिर्विरहिताः शून्याः मात्राः विंशतिर्वर्णा भवन्ति । पारिशेष्याल्ल-घूना लाभः । यतः सप्त गुरून् पातयित्वा विंशतेर्वर्णेभ्यस्त्रयोदश लघवो भवन्ति ताश्च त्रयोदश लघून् सप्तविंशतेर्मात्राभ्यः पातयित्वा मुच्यन्ते मात्राश्चतुर्दश । तासा दले[18] अर्धे सति द्वितीयेनापि प्रकारेण गुरवो लभ्यन्ते । प्रस्तारः । [ ऽ।।।।।।।।ऽ।।ऽऽऽ।ऽ।।ऽ ] ॥ ३२ ॥

इति भट्टमुकुलात्मजहर्षटविरचिताया जयदेवच्छन्दोविवृतौ चतुर्थोऽध्यायः ॥

---

१ लघुकविर० C, लघुकृसुविरचितदल० A, B, २ मूलिते C, ३ गुरुरहिताः स्वा मात्रा वर्णा गुरुवर्जिता लघव. A, B, ४ गुरुको निधने B, ५ कृतिगती A, B, ६ विंसति A, B, ७ सकल० A, B, ८ रन्तेन A, B, ९ मिखा A, B, १० वहिता B; ११ मनन्मात्राः B, १२ अथ A, B, १३ गुरुरहिता पथ्या० A, B, १४ विंसति A, B, १५ स्तन्याः B, १६ सप्तिभि. B, १७ त्रयोदस B, १८ दशार्धे A, दसअर्धे B, १९ नाधि B,

## पञ्चमोऽध्यायः ।

वृत्तम् ॥ १ ॥ सममर्धसमं विषमं च ॥ २ ॥ ग्लौ समान्यनुष्टुभीति ॥ ३ ॥ लगौ प्रमाण्यनन्तरम् ॥ ४ ॥ अन्यदतो हि वितानम् ॥ ५ ॥ नाद्यात्स्नौ योऽम्बुधेर्वक्त्रम् ॥ ६ ॥ युक्पादयोर्जकारेण वक्त्रं पथ्येति संज्ञितम् ॥ ७ ॥ जेनायुजोरुदाहृता विपरीतादिरेपास्मिन् ॥ ८ ॥ वक्त्रं तदेव चपला यद्योजयोर्नकारः स्यात् ॥ ९ ॥ लघुसप्तमयुग्मा या विपुला सा

एवमार्यावैतालीयादिभेदानभिधाय सप्रति समार्धसमविषमवृत्तानि क्रमेणोपदर्शयितुमाह । वृत्तमित्यधिकृतं वेदितव्यमासप्तमाध्यायपरिसमाप्तेः । गुरुलघुनियमात्मक वृत्तम् ॥ १ ॥

समान्याद्यपचित्रादि सममर्धसमं क्रमात् ।
विषम चतुरूर्ध्वादि वृत्तं वृत्तविदो विदुः ॥ २ ॥

ग्लौ गुरुलघू इत्येवमव्यवधानेन समानी नाम वृत्तं अनुष्टुभि छन्दसि । प्रस्तारः ॥ ३ ॥ अनुष्टुभीति वर्तते आपदचतुरूर्ध्वात् । लगौ लघुगुरू अविद्यमानमन्तर यस्मिंस्तथाविधं कृत्वा भवतः प्रमाणीनाम वृत्त भवति अनुष्टुभि छन्दसि ॥ ४ ॥ अत आभ्या समानीप्रमाणीभ्यामन्यदन्यादृश गुरुलघुविन्यासं वितानं नाम वृत्त भवति अनुष्टुभि छन्दसि ॥ ५ ॥ आद्यात्प्रथमाद्वर्णात् सकारनकारौ न भवतः । अम्बुधेर्वर्णचतुष्टयात्परो यदि यकारो वक्त्रं नाम वृत्तं भवति अनुष्टुभि छन्दसि ॥ ६ ॥ अम्बुधेरिति वर्तते । युक्पादयोर्द्वितीयचतुर्थयोरम्बुधेर्जकारेण वक्त्रं पथ्याशब्देन पूर्वपदेन सज्ञितं भवति । पथ्यावक्त्रं नाम वृत्तं भवतीत्यर्थः अनुष्टुभि छन्दसि । आद्यात्सकारनकारौ सर्वासामनुष्टुभा निर्वारितौ ॥ ७ ॥ अस्मिन्ननुष्टुप्प्रकरणे अयुजोः प्रथमतृतीययोः अम्बुधेर्जेन एषा पथ्या विपरीतादिरुदाहृता विपरीतपथ्यावक्त्र नाम वृत्त भवतीत्यर्थः अनुष्टुभि छन्दसि ॥ ८ ॥ तदेव पूर्वोपक्रान्तं वक्त्र चपला चपलावक्त्रं नाम वृत्तं भवतीत्यर्थः अनुष्टुभि छन्दसि । ओजयोः प्रथमतृतीययोः पादयोरम्बुधेः परो यदि नकारः स्यात् ॥ ९ ॥ लघुः सप्तमो ययोस्तथाविधौ युग्मौ द्वितीयचतुर्थौ पादौ यस्याः सा एवप्रकारा मुनेर्भगवतः

१ सामान्य० A, B, २ प्रामाण्य० A; B; ३ योऽम्बुधिवक्त्रम् A; ४ यकारेण A; B, C; ५ युज्यो० A; ६ विपरिताद्रिरेवास्मिन् A; ७ मासध्यापरि० A, B, ८ समदवसमं क्रमा A; B; ९ Hereafter, even this word will be dropped together with the graphical representation, though both are given in the mss. १० सर्वसामनुष्वामानिवारितं A; B;

मता मुनेः ॥ १० ॥ सैतवस्य[1] तु सर्वतः ॥ ११ ॥ भश्चतुर्थात्तद्विपुला[2] ॥ १२ ॥ ततो रश्चेदेवमन्या ॥ १३ ॥ नकारेणापि च तथा ॥ १४ ॥ एवं तकारेणापरा ॥ १५ ॥

प्रथमोऽष्टाक्षरः पादः ।
चतुर्भिरभिवर्धिताः[3] परेऽमुष्मात् ।
क्रमशो यस्य तदेतन्नानाविन्यासशोभि ।
सललितपदपदवीकं[4] पदचतुरूर्ध्वं बुधाः प्राहुः ॥ १६ ॥

इति निगदितजातौ ।
कृतविषमचरणरचनायाम् ।
द्विगुरुनिधनशकल[5] इह हि युत आपीड[6] ।
समुपहितसललितयतियुतिरथ भवति पीडः ॥ १७ ॥

---

पिङ्गलस्य विपुला मता अनुष्टुभि छन्दसि ॥ १० ॥ सैतवस्य पुनः आचार्यस्य सर्वतः चतुर्ष्वपि पादेषु लघुसप्तमा विपुला मता अनुष्टुभि छन्दसि ॥११॥ चतुर्थाद्वर्णाद्भकारस्तद्विपुला भविपुला भवतीत्यर्थः अनुष्टुभि छन्दसि ॥१२॥ ततश्चतुर्थाद्रेफश्चेदेव सति अन्या अपरा रविपुला भवतीत्यर्थः अनुष्टुभि छन्दसि ॥ १३ ॥ तथा तेनैव प्रकारेण चतुर्थान्नकारेण विपुला भवति नविपुलेत्यर्थः अनुष्टुभि छन्दसि ॥ १४ ॥ एवमेव चतुर्थात्परेण (+तकारेण)[7] अपरा भवति तविपुलेत्यर्थः अनुष्टुभि छन्दसि ॥ १५ ॥ अनुष्टुभीति निवृत्तम् । बुधा विपश्चित एवंविध तदेतत् पदचतुरूर्ध्वं नाम वृत्त प्राहुः कथयन्ति । किं तत् । आह । यस्य प्रथमः पादोऽष्टाक्षरः अमुष्मात्प्रथमाच्च पादात् क्रमशो द्वितीयतृतीयचतुर्थाः पादाः चतुर्भिश्चतुर्भिरभिवर्धिता भवन्ति । किंविशिष्टम् । नानाप्रकारेण पादगतेन विन्यासेन रचनया सम्यगभीक्ष्ण शोभत इति । अन्यच्च । सललितेत्यादि । सह लालित्येन शोभया वर्तते । सललितेति[8] गम्यमानार्थत्वात् भावप्रत्ययलोपः । पदाना पदवी मार्गः पदपदवी । सललिता पदपदवी यस्येति । 'नद्यृतश्च' इति कप् । ॥ १६ ॥ इह शास्त्रे इति अनन्तरोक्तेन प्रकारेण कृता विषमा चरणरचना पादविन्यासो यस्यास्तथाविधाया पदचतुरूर्ध्वलक्षणाया वृत्तजातौ निगदिताया विषयभूतायामथानन्तरमाडा युतः पीडो भवति ।आपीडो

---

१ सैतवस्य A; २ भचतु० A, ३ रभिर्वर्धिता. A, ४ पतपदवीकं A, ५ निदनसकल A; निधनसकल B, C, ६ आडा A, B, C, ७ त dropped in A; ८ सल्लेति A;

प्रथमकमितरजपरिवृत्तं ।
यदि च भवति तुर्यम् ॥
चरणयुगमपरमपि भवति यथास्वं ।
द्विगुरुनिधनमखिलमिह गदितमिति कलिकाख्या ॥ १८ ॥
द्वितयमपि च यदि परिवृत्तम् ।
चरण इह सललितयतिरथ तृतीयः ॥
तमनु भवति चाद्यो
द्विदशकनिधनजचरणपरिपठितलवली सा ॥ १९ ॥
द्विगुरुनिधनयुगमृतधारा ।
प्रथमकनिधनभवचरणपरिवृत्त्या ॥
प्रविरचितलघुपदनियतसललितयतिशोभा ।
भवति हि चतुरूर्ध्वे ॥ २० ॥

---

नाम वृत्तं भवतीत्यर्थः । किंभूतः । द्विगुरुनिधनशकलः द्वौ गुरू निधने यस्य तथाविधं शकलं पादचतुष्टय यस्य स तथोक्तः । नियम एवैषः । अतोऽन्यत्र गुरुर्न कार्य इत्यर्थः । तथा सम्यगुपहिता योजिता यासौ पादसंबन्धिनी यतिर्विरामस्तया युतिर्मिश्रेण यस्य स तथोक्तः ॥ १७ ॥ प्रथमक तुर्यमाद्यः पादः इतरजेन द्वितीयेन यदि परिवृत्त भवति प्रथमः पादो यदि द्वितीयत्वं द्वितीयश्च प्रथमत्वं प्राप्नोति । अपरमपि चरणयुगं यथास्वं भवति ध्रौव्येणावतिष्ठते इत्यर्थः । अखिलं पादचतुष्टयमपि द्विगुरुनिधनमिति । एवं सति कलिकाख्या नाम पदचतुरूर्ध्वभेदो भवति । १८ ॥ द्वितीयतृतीयाख्य पादद्वितयमपि यदि परिवृत्त भवति द्वितीयः पादः प्रथमत्व तृतीयश्च द्वितीयत्वं प्राप्त इत्यर्थः । तमनु तृतीयचरणाद् द्वितीयत्व प्रासादनन्तरमाद्यः प्रथमः पादः (+भवति ) सा लवली नाम पदचतुरूर्ध्वभेदः । किंभूता । द्विदशकेत्यादि । द्वौ दशकौ यस्य तथाविधो विंशत्यक्षर इत्यर्थः । एवविधो निधनोत्पन्नश्चरणश्चतुर्थः पादो यस्याः तादृशी परितः समन्तात्पठिता ॥ १९ ॥ पदचतुरूर्ध्वे अमृतधारा नाम वृत्तविशेषः प्रथमकस्य पादस्य निधनभवे चतुर्थे चरणे परिवृत्त्या भवति । किंविशिष्टा । प्रकर्षेण विरचिता प्रसारिता लघुपु पदेपु नियतावश्यभाविनी सललिता यतिशोभा विरामरम्यता यस्याः सा तथोक्ता । हि शब्दः पादपूरणे । एवमेते चत्वारः

---

१ युग्मपर० A, २ निंधन A, ३ कलिकाख्यम् A, ४ यदि dropped in A; ५ परिवृत्तः A; ६ सकलः A; B, ७ निधनो A, B; ८ सकल A; B, ९ मिस्रणं A; B, १० वृत्तिवि० A;

तरसोदिता सर्जसलेषु ।
नसजगुरुकेष्वथैकतः ॥
सस्तु भनजलगुरूणि ततः ।
सजसा जगौ च भवतीयमुद्गता ॥ २१ ॥

क्रियतेऽथ संप्रति तृतीय—
चरणगतलक्ष्मरूपणम् ॥
नौभगावपि हि सौरभकं
यदि चोद्गतासदृशमेव शेपकम् ॥ २२ ॥

द्वितयं नयोरथ सयोश्च ।
भवति चरणे तृतीयके ॥
प्रसृतपदरचनया ललितं ।
ललितं च नाम तदिहाभिनिश्चितम् ॥ २३ ॥

---

पदचतुरूर्ध्वभेदा निरूपिताः ॥ २० ॥ अथ अनन्तरमियमुद्गता नाम वृत्तजाति-र्भवति । किंभूता ( +तरसोदिता ) वेगेनोदिता । तरसादेः शब्दस्यानर्थक्योपदर्शनायेमं तत्रभवन्तः सग्रहश्लोकमाहुः ।

इदं सलक्ष्यं रचितं सलक्षण बबन्ध तस्मात्तरसादिकान्ध्वनीन् ।
प्रपूरण कर्तुमतोऽन्यदस्ति नः प्रयोजन किंचिदपि स्फुट यतः ॥ १ ॥

कासावित्याह । यस्या एकतः प्रथमः पादः सज (+स) लेषु, द्वितीयोपि नसजगुरुकेषु सस्तु, तृतीयो भनजलगुरूणि, ततोऽनन्तर चतुर्थः सजसाजगौ चेति ॥ २१ ॥ अथानन्तर संप्रतीदानीं तृतीयपादगत यल्लक्ष्म लक्षणं तन्निरूपणं क्रियते किं तदिति । 'नौभगावपि' इत्येव सौरभकं नाम वृत्तं भवति । 'भनज ( + ल ) गुरूणि' इत्यस्यापवादो नौभगाविति । शेपक प्रथमतृतीयचतुर्थपादाख्यमुद्गतासदृशमेव भवति रूपान्तरेण नावतिष्ठत इत्यर्थः । २२ ॥ इह छन्दःशास्त्रे तृतीयके चरणे नकारयोः सकारयोश्च द्वितय भवति तल्ललित नाम वृत्तमभिनिश्चितम् । कीदृशम् । प्रसृतया चतुर्षु पादेष्वनुगतया पदरचनया ललित शोभनम् । चकारः उद्गतासदृशमेव शेपकमित्यस्यानुकर्षणार्थः । एवमुद्गता त्रिविधोक्ता ॥ २३ ॥ एवंविधमुपस्थितपूर्वं प्रत्युपित नाम वृत्तमनुगदित

---

१ सज्य A, २ भनज्य० A, ३ च A, ४ जदि A, ५ रचनाया A, ६ तदिहापि कीर्तितम् A; B, ७ रचित हि सल० A, B, ८ प्रपूर्ण A, ९ किंदपि A. १० नकर A, B; ११ सेपक० A; B;

म्सौ ज्भौ गौ च तुरीयमेकतः पृथगन्यत् ।
त्रितय सनजरगेषु नौ सयुक्तौ ॥
अथ नयुतननजयाः ।
प्रचुपितमनुगदितमुपस्थितपूर्वम् ॥ २४ ॥
नौ स्नौ नाच्चे परं सकारमाह तृतीये ।
प्रथमात्पृथगपरेण वर्धमानम् ॥
प्रचुपितसदृशकमन्यदिह भवति शकॅल ।
प्रतिनियतचरणगतलक्ष्मविधानम् ॥ २५ ॥
तस्मिन्नेव तृतीयके तकारयुतौ ज्रौ ।
प्रथमे च विरतिरार्षभं वदन्ति ॥
तच्छुद्धविराड्विशेषणम् ।
प्रचुपितगणसममपरं त्रितयं चेत् ॥ २६ ॥

---

कीर्तितम् । उपस्थितप्रचुपितमित्यर्थः । किंभूतम् । एकत इत्यादि । त्यात्तर्धिः । एकशब्दः प्राथम्ये । यस्य एकतस्तुरीय प्रथमतः पादो म्सौ ज्भौ गौ मकारसकारौ जकारभकारौ गुरू च द्वावित्यर्थः । अन्यत् त्रितयं द्वितीयतृतीयचतुर्थ पादत्रयं पृथक् पृथग्भूतेन लक्षणेनावतिष्ठत इत्यर्थः । कीदृशेन । सनजरगेषु सत्सु द्वितीयः पादः । नौ सयुक्तौ तृतीयः पादः । अथानन्तर नकारयुक्ता ननजयाश्चतुर्थः पादः । चकारः पूर्वापेक्षया समुच्चये ॥ २४ ॥ वर्धमानं नाम वृत्तकं तृतीये पादे नौ ( + स्नौ ), नकाराच्च पर सकारमाह नयुगसननसान्ब्रवीतीत्यर्थः । कीदृशे तृतीये । प्रथमात्प्रचुपिततृतीयपादलक्षणात्पृथग्भूतेनापरे ( + णा ) न्येन लक्षणेन लक्षिते । तत्र हि नौ सयुक्ताविति तृतीयपादलक्षणमुक्तम् । अन्यत् शकॅल प्रथमद्वितीयचतुर्थाख्यं पादत्रयं प्रचुपितसदृशक भवति । कुतः । चरणत्रितयगतं लक्ष्म तस्य विधानं रचना तद्विधान प्रतिनियत प्रचुपित इव नियोजितं चरणगतलक्ष्मविधानं यस्येति विशेषणद्वारेण हेतूपन्यासः ॥ २५ ॥ तच्छुद्धविराड्विशेषणमार्षभ वदन्ति शुद्धविराडार्षभमित्यर्थः । कि तत् । आह ।

---

१ स्मौ C, २ प्रथ० A, C, ३ नात्यपर A; ४ भवति dropped in A; भवति सकलं B; C; ५ नियतगणचरणलक्ष्म A, B; ६ अस्मिन्नेव A; B, ७ तकारपरौ A; B; ८ विरचितार्षभं C; ९ तनयं C; १० प्रजुपित० B; ११ र A; B, १२ चतुरापाद० A; B, १३ भू is dropped in A; १४ सकल A; B; १५ तृतीयगतं A; B; १६ एव A; B,

उपचित्रकमर्धमितो[1] भवेत् ।
सौ सलगा भुवि भत्रितयाद्गौ[2] ॥ २७ ॥
भत्रितयाद्गुरुणी[3] द्रुतमध्या
नजसहितौ च गणौ भवतो ज्यौ ॥ २८ ॥
त्रिसकारचितेर्गुरुकं[4] चेत् ।
वेगवतीति[5] च भादथ भौ गौ ॥ २९ ॥
ज्ञेयस्तजरेफतो गकारो
म्सौ ज्गौ भद्रविराड्[6] गसंहितौ स्यात् ॥ ३० ॥
सजकारसंहतियुतौ सौ[7] ।

तस्मिन्नेव पूर्वोपक्रान्ते तृतीयेक पादे तकारेण युक्तौ जकाररेफौ भवतः । वृत्तान्तरेभ्योऽस्य व्यतिरेकं दर्शयति । प्रथमे च विरतिरिति । तनुमध्यादौ हि सर्वत्र वृत्ते अर्धे एव विरामो दृश्यते । इह पुनः प्रथम एव पादेऽर्धवद्विरतिः । अवशिष्टं पादत्रयमर्धत्वमापद्यते । अपरं पादत्रयं प्रचुपितसंबन्धिभिर्मकारादिभिर्गणैः समं तुल्यं भवति चेत् ॥ २६ ॥ विषमवृत्तविवृतिः समाप्ता ॥
एवमुपस्थितप्रचुपितभेदास्त्रयोऽभिहिताः । संप्रत्यर्धसमानि वृत्तान्युपदर्शयति ।

याजुष्यस्त्रिष्टुभः पङ्क्तेरासुर्यश्चोपचित्रकम् ।
उदाहरणभावेन मतं छन्दोविदामिदम् ॥ १ ॥

इतोऽर्धे भवेत् आध्यायपरिसमाप्तेरर्धसमानि वृत्तानि भवन्तीत्यर्थः । भुवि प्रस्तारभूमौ प्रथमतृतीययोः पादयोः सौ सलगाः द्वितीयचतुर्थयोश्च भत्रितयाद्गुरू भवतः । उपचित्रकं नाम वृत्तं भवति ॥ २७ ॥ प्रथमतृतीययोर्भकारत्रितयाद्गुरुणी भवतः । तृतीयचतुर्थयोश्च नजसहितौ जकारयकारौ गणौ स्याताम् यदि द्रुतमध्या नामवृत्तं भवति ॥ २८ ॥ त्रयाणां सकाराणां समाहारस्त्रिसकारमिति । पात्रादित्वात्स्त्रीत्वाभावः । तस्य चितिर्विनियोजनं तस्याः परं गुरुकं यदि प्रथमतृतीययोः स्यात् । अथ द्वितीयचतुर्थयोर्भकारात्परौ भकारौ गुरू च इत्येवं वेगवती नाम वृत्तं भवति ॥ २९ ॥ तजरेफेभ्यो गकारो गुरुः प्रथमतृतीययोः मकारसकारौ जकारगुरू गसंहितौ गुरुयुक्तौ द्वितीयचतुर्थयोः भद्रविराण्नाम

१ उपचित्रमर्धं० C, २ भत्रित A, ३ तत्रित० A; ४ परं गु A, B, ५ भगव० A; ६ भद्रविरान् गुरुसहित A, ७ रजौ C; ८ प्रचुपित B, ९ अतो A, B, १० तृययो. B; ११ तृतयाद् A, B, १२ जकारनकारौ B,

केतुमती भरेफनगगन्ता ॥ ३१ ॥

आख्यानिका तौ जगुरू गुरुश्चेज् ।

जकारपूर्वास्तजगा गयुक्ताः ३२ ॥

जतौ जगौ गस्ततजा गुरू चे-

दाख्यानिकेयं विपरीतपूर्वा ॥ ३३ ॥

त्रिसकारचितेर्भवेतो लगौ ।

नभभरैश्च गणैर्हरिणप्लुता ॥ ३४ ॥

ननरलैर्गुरुका नजौ जरौ ।

भवति सदापरवक्त्रमीदृशम् ॥ ३५ ॥

भवति जगति नौ ततः परौ यौ ।

नजसहितैर्जरगैश्च पुष्पिताग्रा ॥ ३६ ॥

द्वौ रजौ तथापरौ जरौ गुरुश्च ।

---

वृत्तं भवति ॥ ३० ॥ प्रथमतृतीययोः सकारजकारसंहत्या युतौ सकारगुरू केतुमती नाम वृत्तं भवति । कीदृशी । द्वितीयचतुर्थयोर्भकाररेफनकारगुरवो यस्याः सा तथा । अन्यत्र गन्ता गुरुनिधना तयोः कर्मधारयः समासः ॥ ३१ ॥ प्रथम-तृतीययोस्तकारौ द्वौ जकारगुरू गुरुश्चेद्भवन्ति द्वितीयचतुर्थयोस्तु जकार-पूर्वास्तजगा गुरुणा युक्ताः आख्यानिका नाम वृत्त भवति ॥ ३२ ॥ प्रथम-तृतीययोर्जकारतकारौ जकारगुरू गुरुश्च द्वितीयचतुर्थयोस्ततजा गुरुद्वयं च यदि इयं विपरीतपूर्वा आख्यानिका भवति विपरीताख्यानिकेत्यर्थः । लक्षणद्वयमिदं प्रपञ्चार्थम् । उपजातिभेदेष्वेवान्तर्भावात् ॥ ३३ ॥ प्रथमतृतीययोस्त्रयाणा सकाराणा चयनाद्रचनातः परौ गलौ ( r. लगौ ) भवतः । द्वितीयचतुर्थयोश्च पादयोः नभभरैर्गणैर्हरिणप्लुता नाम वृत्तं भवति ॥ ३४ ॥ प्रथमतृतीययोः ननरलगुरुका द्वितीयचतुर्थयोश्च नजौ जरौ गणौ भवतः । ईदृशमपरवक्त्र नाम वृत्तं सदा नित्यमेव भवति ॥ ३५ ॥ प्रथमतृतीययोर्नकारौ ततः परौ रेफयकारौ द्वितीय-चतुर्थयोश्च नजसहितैर्नकारजकारयुक्तैर्जकाररेफगुरुभिः पुष्पिताग्रा नाम वृत्तं भवति । इयमौपच्छन्दासिकभेदो लक्षणस्य समानत्वात् ॥ ३६ ॥ प्रथमतृतीययोः

---

१ आख्यानकीय A; B, २ परौ भवतो A, B, ३ हरिणप्लुतम् D. v. 28, ४ ननरलगुरुता A. D. v. 15; ५ ततश्च रो यो D. v.17, ६ तत. परौ A, B; ७ संहित्या A; ८ जकार dropped in A; ९ कीदृश० A; B, १० लक्खणस्य B.

यवध्वनेर्मतुप् स्त्रियां समाभिधेया ॥ ३७ ॥

त्रिकविहृतलघुकदशतयमपगतलघुयुगलमखिलमिदमपरम् ॥
सहगुरुकमुभयमपि समुपहितसललितलघुपदविसृति भवति शिखा
॥ ३८ ॥ व्यतिहृतिपरिगतयुगयुगभवसकलचरणसमुपचितदलविरचना ।
इयमपि भवति जगति परिकुटिलचरणनिगदनसदृशसमभिधा ॥ ३९ ॥

इति जयदेवच्छन्दसि पञ्चमोऽध्यायः ॥

---

द्विः रेफनकारौ रेफनकारात्मकः समुदायो द्विर्भवतीत्यर्थः । द्वितीयचतुर्थयोश्च तथा तेन प्रकारेण परौ नकाररेफौ द्विरेव नकाररेफात्मकः समुदायो द्विर्भवतीत्यर्थः । गुरुश्चैको यदि यवध्वनेः यवशब्दात् मतुप् । ततोऽयं स्त्रीप्रत्ययस्तेन सम्यक् आसमन्तात् अभिधेया वाच्या वृत्तजातिर्भवति । यवमतीशब्देनाभिधीयत इत्यर्थः ॥ ३७ ॥ शिखा नामार्धसमभेदो भवति । प्रथमतृतीययोः पादयोरिदं लक्षणं त्रिकविहृतेत्यादि । त्रिकेण विहृत त्रिकविहृतं लघुकानां दशतयं लघुकदशतयं त्रिकविहृतं लघुकदशतयं यस्य तत्तथोक्तम् । अपगत निवृत्तं त्रिंशतो लघुभ्यः लघुयुगलं यस्य तत्तथा । इदमपर द्वितीयचतुर्थपादलक्षणं अखिलं त्रिंशलघुकमेव अनपगतलघुयुगलमित्यर्थः । उभयमपि चरणयुगलमपि गुरुणा सह वर्तते । किं कृत्वा भवति । समुपहितेत्यादि । सम्यगुपहिता योजिता सललिता सशोभा लघूनां पदानां विसृतिः प्रसरण यस्मिंस्तथाविधं कृत्वा ॥ ३८ ॥ जगति इयमपि परितः समन्तात्कुटिलौ यौ चरणौ ताभ्या निगदनं यस्य तेन सदृशी सम्यगभिधा प्रतिपादनं यस्याः सा तथा । खञ्जशब्दाभिधेत्यर्थः । कीदृशी व्यतिहृत्या परिगतौ वैपरीत्येनावस्थितौ यौ युग्मवौ द्वितीयचतुर्थौ अयुग्मवौ च प्रथमतृतीयौ तैः सकलैश्चरणैः सम्यगुपचिता सपादिता दल (+वि) रचना चरणयोजना यस्याः सा तथेति ॥ ३९ ॥

(+ इति) भट्टमुकुलात्मजहर्षटविरचितायां जयदेवछन्दो विवृतौ पञ्चमोऽध्यायः ॥

---

१ स्त्रिया समाविधेयम् A, स्त्रिया समाभिध यम् B, २ पदप्रसृति Com. ३ परिगति A, ४ समुपजनितपदरचना A, B, ५ समाभिधा A, ६ रा dropped in A, ७ तेनै B; तेनैव ? ८ युगलं A, B, ९ अनुपगत A, B, १० वृसृति. B, ११ निगदितं A, १२ खञ्ज A, B, १३ नारिथतौ A,

## ॥ अथ षष्ठोऽध्यायः ॥

त्यौ[1] चेत्तनुमध्या[2] ॥ १ ॥ कुमारललिता ज्सौग् ॥ २ ॥ चित्रपदापि च भौ गौ ॥ ३ ॥ मौ गौ चेत्सा विद्युन्माला ॥ ४ ॥ माणवकं भ्तौ लगुरू ॥ ५ ॥ रान्सौ यदि हलमुखी ॥ ६ ॥ भुजगशिशुसृता नौ मः ॥ ७ ॥ भैवति नसयैस्तु गुर्वी ॥ ८ ॥ भ्मौ मणिमध्यं सश्च यदा ॥ ९ ॥

गायत्री याजुषी दैवी त्रिष्टुप् चोदाहृतामुना ॥
तकारयकारौ चेत्तनुमध्या नाम वृत्त भवति[3] ॥ १ ॥

याजुष्युष्णिक् तथा दैवी जगत्यत्राप्युदाहृता ॥ १ ॥
जकारसकारौ गुरुश्चेत्कुमारललितं नाम वृत्तम् ॥ २ ॥

उदाहृतिस्त्रिसूत्रीयं यजुषा स्यादनुष्टुभः ॥
धात्रीयायाश्च गायत्र्या मैता [ छन्दोविदां तथा ॥ २ ॥ ]

[ भकारौ द्वौ गुरू च ] चित्रपदा नाम वृत्तं भवति । अपि चेति निपातसमुदायः पूर्वापेक्षया समुच्चये ॥ ३ ॥ मकारौ द्वौ गुरू च यदि भवन्ति सा विद्युन्माला नाम वृत्तजातिर्भवति ॥ ४ ॥ भकारतकारौ लगुरू च माणवकं नाम वृत्त भवति ॥ ५ ॥

चतुःसूत्रीयमासुर्यो[6] जगत्या यजुषा तथा ।
बृहत्याः संमता नित्यं छन्दोविद उदाहृतिः ॥ ३ ॥

रेफात्परौ यदि नकारसकारौ भवतः हलमुखी नाम वृत्तजातिर्भवति ॥ ६ ॥ नकारौ द्वौ मकारश्चैको[7] भुजगशिशुसृता[8] नाम वृत्तजातिर्भवति ॥ ७ ॥ नकारसकारयकारैर्गुर्वी नाम वृत्त भवति । तुशब्दः पुनरर्थे ॥ ८ ॥ भकारमकारौ सकारश्च यदा भवन्ति तदा मणिमध्य नाम वृत्त भवति ॥ ९ ॥

---

१ At the beginning of this chapter the following verse is found both in A and B.—

आदिमध्यावसानेषु भजसा यान्ति गौरवम् । यरता लाघवं यान्ति मनौ त्रिगुरुलाघवौ ॥

२ चेत्तन्मध्या A; ३ Vv. 8 and 9 are not found in A and B both. ४ तवति B; ५ Portion within brackets is dropped by both mss. I have supplied it by conjecture; ६ जयासुर्यो A; B; ७ श्चेको B. ८ सिसुसृता A; B;

म्सौ ज्गौ शुद्धविराडितीरिता॥ १० ॥ ख्यातोयं पणव इति म्नौ य्गौ ॥११॥ जौ मयूरसारिणी ततो गौ ॥१२॥ रुक्मवती भ्मौ स्गाविति विद्यात् ॥१३॥ चम्पकमाला चान्यमतेन ॥ १४ ॥ त्जौ ज्गौ गिति चेयमुपस्थिता स्यात् ॥ १५ ॥ तौ ज्गौ गुरुश्चेद्भवतीन्द्रवज्रा ॥ १६ ॥ उपेन्द्रवज्रा तु जतौ जगौ गः ॥ १७ ॥ अनन्तरापादितलक्ष्मशोभौ । पादौ भवेतां विविधै-

आसुर्या त्रिष्टुभः पङ्क्तेर्याजुष्या अपि सम्मतम् ।
सूत्राणा पञ्चकमिदमुदाहरणदर्शने ॥ ४ ॥

भकारसकारौ जकारगुरू इति शुद्धविराट् नाम वृत्तजातिरीरिता उक्ता ॥ १० ॥ मकारनकारौ यकारगुरू इत्येव पणवो नाम वृत्तविशेषः ख्यातः प्रथितः ॥ ११ ॥ रेफजकारौ ततश्च रेफगुरू मयूरसारिणीनाम वृत्त भवति ॥ १२ ॥ भकारमकारौ सकारगुरू रुक्मवतीति विद्यात् ॥ १३ ॥ एषैव रुक्मवती चम्पकमाला अथवा भवति ॥ १४ ॥

यजुष्यास्त्रिष्टुभः पङ्क्तेरसुराणामथापि च ।
उदाहरणभावेन मता सूत्रत्रयोदशी ॥ ५ ॥

तकारजकारौ जकारगुरू गुरुश्च यदि भवन्ति उपस्थिता नाम वृत्त भवति ॥ १५ ॥[10] [ तकारौ द्वौ जकारगुरू गुरुश्चेद्भवन्तीन्द्रवज्रा ] नाम वृत्त भवति ॥ १६ ॥ जतौ जगुरू गुरुश्च उपेन्द्रवज्रा नाम वृत्त भवति ॥ १७ ॥ स्मृतीशैः शास्त्रार्थस्मरणनिपुणैस्ता उपजातयः स्मृताः इत्युक्त कास्ता इत्याह । यासामिमौ पादौ विविधैर्नानाकारैर्विकल्पैश्चतुर्दशभिर्भेदैः भवेताम् । ते च चतुर्दश भेदाः प्रदर्श्यन्ते । प्रथम एवेन्द्रवज्रायाः पादो[11] द्वितीय एव वा तृतीय एव वा चतुर्थ ए( + व ) वेति चत्वारो भेदाः । प्रथमद्वितीयौ प्रथमतृतीयौ प्रथमचतुर्थाविति त्रयो भेदाः । द्वितीयतृतीयौ द्वितीयचतुर्थौ तृतीयचतुर्थाविल्यन्येऽपि त्रयो भेदाः । प्रथमद्वितीयतृतीयाः चतुर्थ[ + प्रथम ]द्वितीयचतुर्थाः

१ विराड्सुदीरिता A, विराड्दुदीरिता B, २ V. 40 given below is found between v 13 and v. 14 in both A and B, ३ चेद्भ्रमसाद्गः; ४ जो गुरू चेत् D. v. 34 ५ This line is dropped here in A and B, but the whole stanza of 4 lines is repeated, along with v. 41, between v 27 and 28, ६ आसुर्या B, ७ रीतिता B, ८ Both A and B add ततश्च after गुरू once more. ९ एषैक A, एवैक B; १० Portion within the brackets supplied by conjecture; ११ पादौ A, B,

विकल्पैः ॥ यासामिमौ श्रव्ययतिप्रपञ्चौ । स्मृताः स्मृतीशैरुपजातयस्ताः ॥ १८ ॥ भौ तु भगौ गिति दोधकमेतत् ॥ १९ ॥ म्तौ त्गौ गश्चेच्छालिनी वेदलोकैः ॥ २० ॥ वातोर्मी म्भौ गदिता त्गौ गुरुश्च ॥ २१ ॥ म्भौ न्लौ गन्ता भ्रमरविलसिता ॥ २२ ॥ नौ रलौ गुरुयुता रथोद्धता ॥ २३ ॥ स्वागता रनभगैर्गुरुकान्ता ॥ २४ ॥ ननसगगिति च भवेद् वृन्ता ॥ २५ ॥

प्रथम [r. द्वितीय] तृतीयचतुर्थाः पादाश्चेत्येवं चतुर्दश भेदाः ।अत्र संग्रह श्लोकाः ।

आद्यो द्वितीयोऽथ तृतीय एव चतुर्थ एवेति भिदश्चतस्रः
आद्यो द्वितीयेन तृतीयकेन चतुर्थकेनेति भिदोऽपि तिस्रः ॥ ६ ॥
द्वितीयकाद्यः सतृतीयको वा सतुर्यको वेति भिदोर्द्वय च ।
तृतीयकस्तुर्ययुतो भिदेका पूर्वो द्वितीयाद्वितृतीयकाभ्याम् ॥ ७ ॥
सार्धं तृतीया[ r. द्वितीया ]द्विचतुर्थकाभ्या ततस्तृतीयाद्विचतुर्थकाभ्याम् ।
तिस्रो भिदोऽथानुभवेद्भिदेका द्वितीयकस्तुर्यतृतीययुक्तः ॥ ८ ॥
स्यादिन्द्रवज्रावृतमप्युपेन्द्रवज्राथ पादे[10] चरणेषु तस्मात् ।
दशोपजातेश्चतुरोऽथ भेदान् प्राहुः कवीन्द्रा निजकाव्यबन्धे ॥ ९ ॥

कीदृशौ पादौ । अनन्तर पूर्वमिन्द्रवज्रोपेन्द्रवज्राभ्यामापादिता जनिता लक्ष्मशोभा लक्षणलक्ष्मीर्ययोस्तौ तथोक्तौ । अन्यच्च । श्रव्यैः श्रवणपेयो यतिप्रपञ्चो विरतिविस्तारो ययोस्तौ तथोक्तौ ॥१८॥ भकारौ द्वौ भगुरू गुरुश्च इत्येतद्दोधकं नाम वृत्तं भवति ॥ १९ ॥ मकारतकारौ तकारगुरू गुरुश्च शालिनी नाम वृत्तं भवति । वेदलोकैश्चतुर्भिः सप्तभिश्च विरामः ॥ २० ॥ मकारभकारौ तकारगुरू गुरुश्च वातोर्मी वृत्तजातिर्गदिता कीर्तिता ॥ २१ ॥ मकारभकारौ नकारलघू भ्रमरविलसिता वृत्तजातिर्भवति । कीदृशी । गन्ता गुरुनिधना ॥ २२ ॥ रेफनकारौ रलौ च रथोद्धता वृत्तजातिर्भवति । कीदृशी । गुरुयुता ॥ २३ ॥ रनभगुरुभिः स्वागता भवति । कीदृशी । गुरुकान्ता गुरुकनिधना ॥ २४ ॥ नकारयुग सकारगुरू गुरुश्च यदि भवन्ति इत्येवं वृत्तानाम वृत्तजातिर्भवेत् ॥ २५ ॥

१ मात्तौ गौ चेत् D. v. 80, २ गुरुश्चेत् A ३ मो भ्नौ गान्ता D.v. 25, ४ रो नरौ लगयुता D v. 81, ५ गुरुणा च A; B, गुरुतोन्ते D. v. 19, ६ Between v. 24 and v. 25, A and B give v. 41 as given below. ७ आद्यौ A, B, ८ काद्यः A; B, ९ वृत्तमेप्यु A, B, १० पादे च चर० A; B; ११ सव्य· स्रवण० A, B, १२ यदिप्रपञ्चैर्वि० B; १३ जयोस्तौ A, B, १४ विरामै A, B,

ननरलगिति चैव भद्रिका ॥ २६ ॥ श्येन्युदीरिता रजौ रलौ गुरुः ॥ २७ ॥ वदन्ति वंशस्थमिदं जतौ जरौ ॥ २८ ॥ तादिन्द्रवंशा जरसंहिता मता ॥ २९ ॥ द्रुतविलम्बितमाह नभौ भरौ ॥ ३० ॥ वसुजलधिविरामौ नौ पुटा म्यौ ॥ ३१ ॥ ऋतु जसजसा जलोद्धतगतिः ॥ ३२ ॥ अथ तोटकमब्धिसकारचितम् ॥ ३३ ॥ भुजङ्गप्रयातं चतुर्भिर्यकारैः ॥ ३४ ॥ कीर्तितैषा चतूरेफिका स्रग्विणी ॥ ३५ ॥ प्रमिताक्षरा सजयुतावथ सौ ॥ ३६ ॥ मौ यौ पञ्चाश्वैर्वैश्वदेवीति नाम्ना ॥ ३७ ॥

नयुगं रलघू गुरुश्च इत्येतेन लक्षणान्तरेण भद्रिका नाम वृत्तजातिर्भवति ॥ २६ ॥ रजौ रलौ गुरुः श्ये[10]नी वृत्तजातिरुदीरिता ॥ २७ ॥

सूत्रद्वादशकेनोष्णिग् धात्रीयानेन यांगुषी ।
जगती सामनी चापि गायत्री समुदाहृता ॥ १० ॥

जतौ जरौ इदं वंशस्थं नाम वृत्तमुशन्ति कथयन्ति ॥ २८ ॥ तकारौ द्वौ इन्द्रवंशा नाम वृत्तजातिर्भवति । कीदृशी । जकाररेफयुक्ता ॥ २९ ॥ द्रुतविलम्बितं नाम वृत्तं कर्तुं स्वलक्षणं नभौ भरौ आह ब्रवीति ॥ ३० ॥ नकारौ द्वौ मकारयकारौ पुटाख्या वृत्तजातिर्भवति । कीदृशी । वसुजलधिविरामा अष्टभिश्चतुर्भिश्च विरामो यस्या सा तथा ॥३१॥ जसजसाः जलोद्धतगतिर्वृत्तजातिर्भवति । ऋतु यदि षट्के षट्के विरामोऽस्या भवतीत्यर्थः ॥ ३२ ॥ अथानन्तरमब्धिसंख्याकैश्चतुर्भिः सकारैश्चितं रचितं तोटकं नाम वृत्तं भवति ॥ ३३ ॥ चतुर्भिः यकारैर्भुजङ्गप्रयातं भवति ॥३४॥ चत्वारो रेफा विद्यन्ते यस्याः सा एषा स्रग्विणी कीर्तिता ॥३५॥ सजयुतौ सकारौ द्वौ भवतः प्रमिताक्षरा वृत्तजातिर्भवति॥३६॥ द्वौ मकारौ यकारौ च द्वौ इत्येवं नाम्ना संज्ञया वैश्वदेवी[14] वृत्तजातिर्भवति । कीदृशी । पञ्चाश्वा[15] पञ्च अश्वाश्च यस्याः सा तथा । पञ्चमसविरामेत्यर्थः ॥३७॥

१ Between v. 26 and v. 27 A and B give v. 42 as given below; २ सेन्यु० A; B; C, but see com. स्येनी=श्येनी; ३ Between v. 27 and v. 28 A and B give v. 41, 16 ( both repeated ) and v. 43 as given below; ४ संहितो A; ५ Both A and B give v. 33 as given below between v. 29 and v 30, ६ मत्र A; B, ७ पुटो C; ८ Both A and B give v. 44, 45 46 and 33 respectively as given below, between v. 32 and v. 33, ९ इत्येवन A, B, १० स्येनी B; ११ वसन्ति B, १२ वंसा B; १३ संधाय A, B; १४ वैश्वदेवी B; १५ पञ्चाश्वा B,

म्भौ स्मौ ख्याता जलधरमालाब्ध्यङ्गैः ॥ ३८ ॥ इति नवमालिनी नजयुतौ भ्यौ ॥ ३९ ॥ [ म्भौ सौ चेत्सा भवति हि मत्ता ॥ ४० ॥ उपस्थितमिदं ज्सौ त्गौ गुरुश्चेत् ॥ ४१ ॥ पञ्चरसैः श्रीर्भतनगगैश्च ॥ ४२ ॥ चन्द्रवर्त्म रनभासविरचितम् ॥ ४३ ॥ गदितमिदं ततो नौ म्रौ नामतः ॥ ४४ ॥ न्यौ न्याविति निर्दिष्टा पुष्पविचित्रा ॥ ४५ ॥ भवति ननभरैश्चलनेत्रिका ॥ ४६ ॥ ]

॥ इति जयदेवच्छन्दसि षष्ठोऽध्यायः ॥ ६ ॥

---

मकारभकारौ सकारमकारौ जलधरमाला वृत्तजातिः ख्याता कीर्तिता । अब्ध्यङ्गैश्चतुर्भिरष्टभिश्च विरामैरित्यर्थः ॥ ३८ ॥ नजयुतौ मकारयकारौ नवमालिनी वृत्तजातिर्भवति ॥ ३९ ॥ [ इति भट्टमुकुलात्मजहर्षटविरचितायां जयदेवछन्दोविवृतौ ] षष्ठोऽध्यायः ॥

---

१ गदितमिततो A; B, the adopted reading is conjectural, २ Thus in brief, both in point of order and extent AB represent a text tradition which differs from that of C in this chapter. The latter i. e. C drops 7 metres (vv. 40-46) in all and adds (vv. 8-9). On the other hand, AB repeat 2 definitions (vv 18, 41). The order of metres in the AB tradition is as follows 1-7; 10-18, 40, 14-24; 41; 25-26, 42, 27, 41; 18, 43, 28-29, 33, 30-32, 44-46, 38; 34-37; 39.

## अथ सप्तमोऽध्यायः ।

म्नौ ज्रौ गस्त्रिकदशकौ प्रहर्षिणी[1] स्यात् ॥ १ ॥ जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ॥ २ ॥ म्तौ य्सौ गन्तं रैव यतिर्मत्तमयूरम् ॥ ३ ॥ म्तौ न्सौ गौ पञ्चग्रहविरतिरसंबाधा ॥ ४ ॥ मुनियतिरपराजिता ननरस्लगैः ॥ ५ ॥ प्रहरणकलिता च ननभनलगैः ॥ ६ ॥ त्भौ जौ वसन्ततिलकं गुरुकद्वयं चेत् ॥ ७ ॥ गुरुनिधनमनुलघुरिह शशिकला ॥ ८ ॥ स्रगियमपि च रसनवकविरमणा ॥ ९ ॥ वसुमुनियतिरिति

चतुःसूत्रीयमासुर्या उदाहृतिर ( + नु ) ष्टुभः ॥

मकारनकारौ जकाररेफौ गुरुश्च प्रहर्षिणी वृत्तजातिर्भवेत् । त्रिकदशकौ विरामौ यती ॥ १ ॥ जभौ सजौ गुरुश्च इति रुचिरा वृत्तजातिर्भवति । चतुर्भि-र्ग्रहैश्चतुर्भिर्नवभिर्विरामैः ॥ २ ॥ मकारतकारयकारसकारा मत्तमयूर नाम वृत्तं भवति । कीदृशम् । गन्त गुरुनिधनम् । रैव यतिश्चतुर्ग्रहैरिति ॥ ३ ॥

उदाहृतिश्चतुःसूत्री मता सामासुरोष्णिहः ॥ १ ॥

मकारतकारौ नका(+रसका)रौ गुरू च असबाधा नाम वृत्तजातिर्भवति । कीदृशी । पञ्चसु ग्रहेषु च नवसु विरतिर्यस्याः सा तथा ॥ ४ ॥ ननरसलगैर-पराजितानाम वृत्तजातिर्भवति । कीदृशी । मुनियतिः सप्ताक्षरविरामा ॥ ५ ॥ ननभनलगैः प्रहरणकलिता वृत्तजातिर्भवति । चकारः पूर्वापेक्षया समुच्चये ॥ ६ ॥ तकारभकारौ जकारौ द्वौ गुरुकद्वय यदि भवन्ति वसन्ततिलक नाम वृत्त भवति ॥ ७ ॥

चतुःसूत्रीयमासुर्या गायत्र्याः स्यादुदाहृतिः ॥

इह छन्दःशास्त्रे शशिकला नाम वृत्तजातिर्भवति । कीदृशी । गुरुनिधने-त्यादि । गुरु निधनमन्तो येषा ते गुरुनिधनाः । मनवश्चतुर्दश तत्स-ङ्ख्याका लघवो मनुलघवः गुरुनिधना मनुलघवो यस्याः सा तथोक्ता ॥ ८ ॥ इयमपि एवैव शशिकला स्रङ्नाम वृत्तजातिर्भवति । रसनवकेत्यादि । षट्सु नवके च विरमण यस्याः सा तथोक्ता शशिकला । तस्यै इयानेव विशेषः ॥ ९ ॥ मणिगुणनिकरो नाम शशिकलाभेदो वृत्तविशेषो भवति । कीदृशः । वसुमुनि-

१ दशकै. प्रहर्षणीयम् D १. ३३, २ वसन्ततिलका A; ३ निवन० A; ४ स्रगिय० A; ५ सप्तत्रयीय० ? ६ मकारतकारौ नकारोष्णिहः मक रतकारौ नकारौ गुरुश्च A; मकारतकारौ नकारौ गुरुच B; ७ पञ्चपु A.

मणिगुणनिकर. ॥ १० ॥ वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः ॥ ११ ॥ भ्रत्रिनगं मुने. ऋषभगजविलसितम् ॥ १२ ॥ यमौ न्सौ भ्लौ गन्ता रसहरविरामा शिखरिणी ॥ १३ ॥ वसुग्रहयुता जसौ जसयलाश्च पृथ्वी गुरुः ॥ १४ ॥ दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ १५ ॥ भवति हरिणी न्सौ म्रौ स्लौ गो रसोदधिसप्तकैः ॥ १६ ॥ मन्दाक्रान्ता मभनततगा गः समुद्रर्तुलोकैः ॥ १७ ॥ नजभजजा लगौ च यदि नर्कुटकं तु तदा ॥ १८ ॥ म्तौ न्यौ यौ ज्ञेया कुसुमितलतावेल्लिता-

---

यतिः अष्टसप्तविराम इत्यर्थः । शशिकलाछन्दस एव भेदः । शशिकला त्रिविधा प्रतिपादिता ॥ १० ॥ नकारौ द्वौ मकारयकारौ यकारश्च यदि भवन्ति मालिनी नाम वृत्तं भवति । कीदृशी । वसुमुनिविरतिः अष्टसप्तविरामेत्यर्थः ॥ ११ ॥

उदाहृतिरिदं सूत्रं धातुर्धर्म्मोरनुष्टुभः ॥ २ ॥

भकाररेफाभ्यां परे त्रयो नकाराः गुरुश्च ऋषभगजविलसितं नाम वृत्तं भवति । मुनेः सं सप्तभ्यो विरमणमित्यर्थः ॥ १२ ॥

सूत्राणि (+च) पद्यस्यैरिमानि स्युरुदाहृतिः ॥

यकारमकारौ नकारसकारौ भकारलघू शिखरिणी नाम वृत्तजातिर्भवति । कीदृशी । गन्ता गुरुनिधना । अन्यच्च रसहरविरामा षडेकादशयतिरित्यर्थः ॥१३॥ जसौ जसयला गुरुश्च पृथ्वी नाम वृत्तजातिर्भवति । कीदृशी वसुग्रहयुता अष्टनवकविरामेत्यर्थः ॥ १४ ॥ भरनभनलगैर्वंशपत्रपतितं नाम वृत्तं भवति । कीदृशम् । दिङ्मुनि दिशो मुनयश्च यस्य तत्तथा । दशसप्तविरमणमित्यर्थः ॥ १५ ॥ नकारसकारौ मकाररेफौ सकारलघू गुरुश्च हरिणी नाम वृत्तं भवति । रसोदधिसप्तकैः षट्चतुःसप्तभिर्विरामैः ॥ १६ ॥ मभनततगा गुरुश्च मन्दाक्रान्ता नाम वृत्तजातिर्भवति । समुद्रर्तुलोकैः चतुःषट्सप्तभिर्विरामैः ॥ १७ ॥ नजभजजाः लघुगुरू च यदि भवन्ति तदा नर्कुटकं नाम वृत्तं भवति ॥ १८ ॥

---

१ वरति० A; २ भत्रिनगः A, भ्रत्रिनगे. B, ३ मो स्लवन्ता D. v. 8, ४ A and B give v. 18 as given below between v. 13 and v. 14, ५ प्रथ्वी A, ६ म्रौ स्लौ B, C; ७ नजभजानो A; ८ Both A and B give v. 35 as given below between v. 17 and v. 18, ९ ज्ञेया A, B, १० धात्रिसाम्नीमनुष्टुभ. A, B, ११ सिख० B, १२ सकारो B.

क्षर्तुलोकैः ॥ १९ ॥ यमौ न्सौ रौ गश्चेद् द्विरसविरतिर्मेघविस्फूर्जिताश्वैः ॥ २० ॥ म्सौ जमौ तौ गुरुकं च सूर्येतुरगैः शार्दूलविक्रीडितम् ॥ २१ ॥ म्रौ भ्नौ य्भौ लगौ मुनिभ्य स्वररसविरतिः ख्याता सुवदना ॥ २२ ॥ वृत्तमेतदीदृशं तु नामतस्त्रिगो रजौ गुरुर्लघुश्च ॥ २३ ॥ म्रौ भ्नौ याश्च त्रयः स्युः स्वरमुनितुरगैः स्रग्धरा स्याद्विरामैः ॥ २४ ॥ विद्धि

गायत्र्याः स्यादृचा साम्ना बृहत्या इदमुदाहृतिः ॥ ३ ॥

मकारतकारौ नकारयकारौ तथा यकारौ द्वौ च कुसुमितलतावेल्लिता नाम वृत्तजातिर्भवति । अक्षर्तुलोकैः । अक्षाणीन्द्रियाणि । पञ्चषट्सप्तभिर्विरामैरित्यर्थः ॥१९॥

छन्दसोऽतिधृतेः सूत्रद्वयं त्विदमुदाहृतौ ॥

यमौ नकारसकारौ रेफौ द्वौ गुरुश्च यदि मेघविस्फूर्जिता वृत्तजातिर्भवति । कीदृशी । द्विः रसाः द्विरसाः । गतार्थत्वात्सुचो लोपः । तेषु षट्सु षट्सु विरतिर्यस्याः सा तथा । अश्वैः सप्तभिश्च विरामैः ॥ २० ॥ मकारसकारौ जकारसकारौ तकारौ द्वौ गुरुक च शार्दूलविक्रीडित नाम वृत्त भवति । सूर्यचतुरैः द्वादशसप्तभिर्विरामैः ॥ २१ ॥

धात्रीयायाः बृहत्याः स्यात्साम्ना पङ्क्तेरथापि च ।
उदाहरणभावेन द्वितय सूत्रयोरिदम् ॥ ४ ॥

मकाररेफौ भकारनकारौ यकारभकारौ लघुगुरू च सुवदना वृत्तजातिः ख्याता कीर्तिता । कीदृशी । मुनिभ्यः स्वररसविरतिः सप्तसु यतेरनन्तर सप्तषड्विरतिः ॥ २२ ॥ त्रिशः[13] त्रीन् वारान् रेफजकारौ गुरुर्लघुश्च नाम (+तः) ईदृशमेतत् वृत्त भवति सुवदनैव भवतीत्यर्थः । तस्या एवेदमपरं लक्षणम् ॥२३॥

ऋचा स्यादुष्णिहः सूत्रमिद मेतैमुदाहृतिः ॥

मकाररेफौ भकारनकारौ यकाराश्च त्रयो भवेयुः स्रग्धरा नाम वृत्त भवति । स्वरमुनितुरगैः स्वरा मुनयस्तुरगाश्च प्रत्येकं सप्तसङ्ख्यास्तैर्विरामैः ॥ २४ ॥

सामनी त्रिष्टुभेतेन सूत्रेण समुदाहृता ॥ ५ ॥

भरौ नरौ नरनगाः इद मद्रक नाम वृत्त विद्धि जानीहि । कीदृशम् । दशो-

१ सूर्यचतुरै. C and Com.; २ ल्गौ C, ३ मुनिभ्योमगरस॰ D. v. 6; ४ त्रिधा A, B, ५ भ्रग्धरा A, ६ द्विः रसा २ A, द्वि रसा. द्वि. रसा. B, ७ पट्सु पट्सु B, ८ अश्वै B, ९ सार्दूल॰ B १० वृत्तजाति. A, ११ द्वादश च सप्त B, १२ भवति A, १३ त्रिशः B, १४ सतमु॰ A, B, १५सामरी त्रिष्टुभे तेन B, १६ स is dropped in A, १७ विजानीहि for the two words in A.

भरौ नरौ नरनगा दशोष्णगुविरामि मद्रकमिदम् ॥ २५ ॥ हरतपनै नजौ भजयुतौ भजौ भलगुरूणि चाश्वललितम् ॥ २६ ॥ मौ त्नौ नौ न्लौ मत्ताक्रीडं वसुविषयदिगिति भवति गुरुयुतम् ॥ २७ ॥ भ्तौ नसभा भ्नौ शरमुनितपनैर्येन युतापि च भवति हि तन्वी ॥ २८ ॥ क्रौञ्चपदा भ्मौ स्मौ नचतुष्कं गुरु च शरविषयवसुमुनिविरतिः ॥ २९ ॥ मौ[2] त्नौ नौ रः सलाः प्राहुर्वसुमदनदहनमुनिभिर्भुजङ्गविजृम्भितम् ॥३०॥

ष्णगुविरामि दश च उष्णगवश्च दशोष्णगवौ ( दश+ ) द्वादशेत्यर्थः । तत्र विरामो दशोष्णगुविरामः स विद्यते यस्य तत् तथोक्तम् ॥ २५ ॥

उभे सूत्रे इमे स्याता विकृतेः समुदाहृतौ ॥

नजौ भजयुतौ भजौ भलगुरूणि चाश्वललित नाम वृत्त भवति । हरतपनै यदि एकादशद्वादशविरतिः ॥ २६ ॥ मकारौ द्वौ तकारनकारौ नकारौ च द्वौ नकारो लघुश्च इत्येव मत्ताक्रीड नाम वृत्तं भवति। कीदृक् । गुरुयुतम् । तथा वसुविषयदिक् वसवो विषया दिशश्च यस्य तत्तथोक्तम् । अष्टसु पञ्चसु दशसु च विरतिरस्येत्यर्थः ॥ २७ ॥

ऋचामनुष्टुप् पङ्क्तिश्च धात्रीया सामनी तथा ॥ ६ ॥
जगती यति-गायत्री सूत्रेणोदाहृतामुना ॥

भकारतकारौ नकारसकारमकारास्तथा भकारनकारौ तन्वी वृत्तजातिर्भवति । कीदृशी । येन युता । अपिशब्दः पूर्वापेक्षया समुच्चये । चशब्दः पादपूरणार्थः । हिशब्दो वाक्यालङ्कारे । शरमुनितपनैः पञ्चसप्तद्वादशभिर्विरामैः ॥ २८ ॥

उदाहृतिमभिकृतेरिदं सूत्र बुधा विदुः ॥ ७ ॥

भकारमकारौ सकारमकारौ नकाराणा चतुष्क गुरु च क्रौञ्चपदा वृत्तजातिर्भवति । कीदृशी । शरविषयवसुमुनिविरतिः पञ्चपञ्चाष्टसप्तविरामेत्यर्थः ॥ २९ ॥

आपादितानि वृत्ताया वृत्ताऋचामिमे ( ? ) ।
उभे सूत्रे भवेता पाथ्युदाहरणमुत्कृतेः ॥ ८ ॥

मकारौ द्वौ तकारनकारौ नकारौ च द्वौ रेफसकारौ लघुगुरू इत्येते कर्तारो भुजङ्गविजृम्भित नाम वृत्त प्राहुः कथयन्ति । वसुमदनदहनमुनिभिः

१ युतो ननु भवति हि० A; २ मौ तो ना रः D v. 47, ३ सद्रूत A; B, ३ चास्व० A, B, ४ विसश्च A, B; ५ दससु A; B, ६ यदि A; B, ७ समुच्चयो शब्द. A; ८ सर A; B, ९ ग्रस्त A, १० अपादितानि A, ११ प्राहु dropped in A;

न्नौ नाः पञ्च सगगिति च नवरसवृषगतिविरमणमपवाहाख्यम् ॥ ३१ ॥
प्रथमक इह दण्डकश्चण्डवृष्टिप्रयातो भवेन्नद्वयेनाथ रैः सप्तभिः ॥३२॥ प्रति-
पदमिह रेफवृध्या स्युरर्णोर्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥३३॥
प्रचित इह कविभिर्वर्णितोऽस्मादिहोपात्तशेषत्रिकैरुत्तरैर्नद्वयाद्यैः ॥ ३४ ॥
[नजभजजेषु गौ यदि वदन्ति च वाणिनीं ताम् ॥३५॥ विषमाक्षरपाद वा
पादैरसमं दशधर्मवत् । तन्त्रेऽस्मिन्यदसिद्धं गाथेति तत्पण्डितैर्ज्ञेयम् ॥३६॥
माण्डूकी चित्रा वा सद्भिः कीर्तिता मौ मयौ यः ॥ ३७ ॥ ]

॥ इति जयदेवच्छन्दसि सप्तमोऽध्याय. ॥ ७ ॥

---

अष्टैकादशैश्चतभिर्विरामैः ॥ ३० ॥ मकारनकारौ नकाराश्च पञ्च सकारो गुरुद्वयं च इत्येवमपवाहाख्यं नाम वृत्तं भवति । कीदृशं नवरसवृषगतिविरमणं नवषडेकादशविरमणमित्यर्थ. ॥ छन्दोऽधिकारस्य पूर्णो विधिः ॥ ३१ ॥ इह छन्द.शास्त्रे नद्वयेनाथानन्तरं रैश्च सप्तभिः प्रथमक आद्यश्चण्डवृष्टिप्रयातो नाम दण्डको भवेत् । ॥ ३२ ॥ नद्वयेनाथ रैः सप्तभिरिति वर्तते । प्रतिपदं स्थाने स्थाने रेफवृध्या सप्ताना रेफाणामधिकेनाधिकेन रेफेण अर्ण-अर्णव-व्याल-जीमूतलीला-कर-उद्दाम-शङ्ख-इत्येवसंज्ञका दण्डका भवन्ति । आदिशब्दः प्रकारे ॥ ३३ ॥ नद्वयेनेति वर्तते । इह दण्डकप्रकरणे कविभिः प्रचितो नाम दण्डको वर्णितः कैः कारणभूतैः अस्मात्पूर्वोपक्रान्तचण्डवृष्टिप्रयाताख्यदण्डकादुपात्ताः परिगृहीताः रेफवर्जिता ये शेषा मकारादयस्त्रिकास्तैरुत्तरैः परैः । कीदृशैः नद्वयाद्यैः नद्वयमाद्यं येषा तैस्तथोक्तैः । केचित्तु व्याचक्षते ' नद्वयादुत्तरैर्यकारैः' इति । व्यक्तं ह्यस्मिन्नकारद्वयादुत्तरे यकाराः सप्त दृश्यन्ते । महाकाव्येषु मकारादिरचितप्रचितदण्डकोदाहरणमन्वेष्टव्यम् । एतेषा मात्रावृत्तादीनां ग्रन्थगौरवभयादुदाहरणानि न प्रदर्शितानि । सुमतिभिः महाकाव्येभ्यो विचार्याणि ॥ ३४ ॥

[ इति भट्टमुकुलकात्मजहर्षटविरचितायां जयदेवच्छन्दोविवृतौ ] सप्तमोऽध्यायः ।

---

१ नवरसरसकृतविरमन० A, B, २ दण्डश्चण्ड A, ३ न. द्वयेना० A, ४ जीमूत B, ५ संखादय A, B, संख्यादय. C; Com. ६ इति A, B, D v. 61, ७ A and B give vv 36-37 after v. 34 ८ अष्टैकादश B, ९ णद्वये A, १० संख्येत्येवं B, स्स्या इत्येवं A, ११ नाम दण्डिको A, नामको वर्णित. B, १२ चण्डवृष्ट० A, १३ परिगृहीतरेफ० B, १४ तैस्त० B, १५ सुमतिभि B, १६ महावाक्येभ्यो A, B।

## ॥ अथ अष्टमोध्यायः ॥

प्रस्तारो नष्टमुद्दिष्टमेकद्वित्रिलघुक्रिया ।
संख्या चैवाध्वयोगश्च पड्विधं छन्द उच्यते ॥ १ ॥
सर्वत्रैव च्छन्दसि संस्थाप्यादौ समस्तगुरु वृत्तम् ।
आद्यस्य तत्र गुरुणो लघु कृत्वाधः समं शेपम् ॥ २ ॥
विधिमेतमेव कुर्याद्भूयोऽप्यादिं च पूरयेद् गुरुभिः ।
इति यावत्सर्वलघु प्रस्तारे वृत्तविधिरेपः ॥ ३ ॥

---

एवं मात्रावृत्तसमार्धसमविषमवृत्तानि प्रतिपाद्य सप्रति प्रस्तारादीन् श्लोकेनोद्दिशति । छन्दः पड्विधमुच्यते । कथम् । आह । प्रस्तारः, नष्टं, उद्दिष्टं, एकद्वित्रिलघुक्रिया, संख्या चैव अध्वयोगश्चेत्येवम् । एते प्रस्तारादयः आक्षिप्त-स्वसबन्धोर्पाव्यक्षरादिवृत्ता द्रष्टव्याः । अन्यथा छन्द इति वाचोयुक्तिरसंवद्धा स्यात् । अक्षरकोशात्मक छन्द इति ह्युच्यते । तथा च तत्रभवन्त आहुः । प्रस्तारादौ क्रियाभेदे च्छन्दोवृत्तौपचारकीति ॥ १ ॥ सर्वत्रैव विश्वस्मिन्नेव एकद्व्यक्षरादिरूपे छन्दसि आदौ पूर्वं समस्तानि गुरूणि यस्य तादृशं वृत्तं गुरुसमुदायस्वभावं संस्थाप्य विन्यस्य अनन्तरं तत्र वृत्ते यदाद्यं प्रथमगुरु तस्याधोऽचुने[7] (?) लघु कृत्वा विन्यस्य शेपं पूर्वापेक्षितया समं संस्थाप्य एतमेव विधिमाद्यस्य गुरुणोऽधो लघुकरण सम [10] शेपमित्येवरूपं भूयोऽपि पुनः

---

१ पडेते प्रत्यया स्मृता. A; B; २ In place of vv 2-12 both A and B contain *the following four stanzas, colophon and the scribe's autograph* - गुर्वादौ वर्णसमं गुरोरधो लघुस्ततो ह्युपरि तुल्यम् । लघुतुल्यगुरूणि न्यसेत् लघ्वेकं शेपमुपरि समम् ॥ २ ॥ नष्टैवैकं छित्वार्धे लघूनि विधाद्गुरूणि तत्संके । स्थानद्विगुणैरङ्कैर्लघुमिश्रै. सैकमुद्दिष्टम् ॥३॥ एकादीन्येकोत्तरकान्वर्णसमान्क्षिपेदुपर्युपरि । मुक्त्वाग्रादेकैकमेकद्विन्यादि लघु विधात् ॥४॥ सार्धं संकलिता सख्या द्वि(+ क )गुणरूपवर्जिताध्वानम् । पट्प्रत्ययसंक्षेप. प्रोक्तस्त्वथ विस्तरं वक्ष्ये ॥५॥ इति जयदेवच्छन्दसि अष्टमोऽध्यायः समाप्त । संवत् ११९० मार्गशुदि १४ सोमदिने श्रीमर्वदेवाचार्याय शिष्यस्य देवचन्द्रस्यार्थे पं० श्रीधरेण जयदेवच्छन्दमूलसूत्रमलेखि॥ पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयो. । षष्ठं गुरु विजानीयादेतच्छ्लोकस्य लक्षणम् ॥ १ ॥ ३ सेखं C, ४ याक्षक्ष A, B, ५ कोसात्मक B, ६ क्रियामेदे छन्दोवत्तौ० ? ७ नुने लघु B, ८ समे A, B, ९ गुरुणोमे A; B, १० सेप० B;

नष्टे यावतिथं स्याद्वृत्तं संस्थापयेत्तमेवाङ्कम् ।
अर्धेनावच्छिन्द्यात्समं हि कृत्वेतरत्सैकम् ॥ ४ ॥
एवं हि क्रियमाणे सैके गुर्वक्षराणि लभ्यन्ते ।
इतरत्र लघून्येव प्रनष्टमुत्पादयेद्वृत्तम् ॥ ५ ॥
उद्दिष्टं कतिथमिदं वृत्तं संस्थापयेदुपरि तस्य ।
स्थानद्विगुणानङ्कानेकादीनक्षरक्रमशः ॥ ६ ॥
ये सन्त्युपरि लघूनि तेषां तैर्मिश्रितैस्तु यो राशिः ।
भवति गतैस्तावद्भिः प्रस्तारविधौ तु तद्वृत्तम् ॥ ७ ॥

---

पुनः कुर्यात् आदिं च गुरुभिः पूरयेत् तावद्विन्यस्येद्यावत्सर्वे लघवो भवन्ति। एष प्रस्तारे वृत्तविधिः वृत्तानां प्रस्तारे एष विधिः। एवं प्रस्तरणीयानि वृत्तानि। एकद्वित्रिचतुरक्षरवृत्तानां प्रस्तारः प्रदर्श्यते। एकैकाक्षरस्य तावत् [ऽ]। द्व्यक्षरस्य [ऽऽ, ।ऽ, ऽ।, ।।]। त्र्यक्षरस्य [ऽऽऽ, ।ऽऽ, ऽ।ऽ, ।।ऽ, ऽऽ।, ।ऽ।, ऽ।।, ।।।]। चतुरक्षरस्य [ऽऽऽऽ, ।ऽऽऽ, ऽ।ऽऽ, ।।ऽऽ, ऽऽ।ऽ, ।ऽ।ऽ, ऽ।।ऽ, ।।।ऽ, ऽऽऽ।, ।ऽऽ।, ऽ।ऽ।, ।।ऽ।, ऽऽ।।, ।ऽ।।, ऽ।।।, ।।।।]। एवमेकद्वित्रिचतुरक्षरवृत्तानां प्रस्तारः प्रदर्शितः। अनयैव दिशा पञ्चाद्यक्षराणि वृत्तानि प्रस्तरणीयानि ॥ २ ॥ ३ ॥ यावतां पूरणं यावतिथमिति [1]'डट्वितोरियुक्' (पा० ५-२-५३) इत्यनेन थुगागमः। यावतिथं द्वितीयं तृतीयं वा वृत्तं नष्टं स्यात्तमेव द्वि[2]त्रिप्रत्यायकमङ्कं संस्थापयेत् उल्लिखेत्। समं द्विचतुरादिप्रत्यायकमङ्कमर्धेनावच्छिन्द्यात्। इतरमेकत्र्यादिप्रत्यायकमङ्कं सैकं कृत्वा अर्धेनावच्छिन्द्यात्। एवं हि क्रियमाणे सैके अर्धेना[3]वच्छिद्यमाने अङ्के गुरुण्यक्षराणि लभ्यन्ते। इतरत्र समे द्विचतुरादिप्रत्यायकेऽर्धेनावच्छिद्यमाने लघूनि लभ्यन्ते। एवं चानया युक्त्या प्रनष्टं वृत्तमुत्पादयेत् ॥ ४ ॥ ५ ॥ कतीनां पूरणं कतिथमिति [4]डटिषट्कतिकतिपयचतुरां थुक् (पा० ५-२-५१) इति थुगागमः। [5]कतिथं किंसंख्याकमिदं वृत्तमित्युद्दिष्टं प्रस्तीर्योपदर्शितं यत्तस्योप[6]रि अक्षरक्रमेण स्थाने स्थाने एकादीनङ्कान्संस्थापयेत्। तेषामक्षराणां मध्ये यानि लघ्व[7]क्षराणि

---

१ तुति० A, B, २ द्वित्रप्र० A, B, ३ नार्धं छिद्य० B, ४ तुति० A, B, ५ कथिये B, ६ Portion beginning with रि अक्षर and ending with मक्षराणां is dropped in A; ७ लघूक्षराणि B,

वृत्ताक्षराणि यावन्त्येकेनाधिकतराणि तावन्ति ।
ऊर्ध्वक्रमेण रूपाण्यादौ विन्यस्य तेषां तु ॥ ८ ॥
आद्यं क्षिपेद्द्वितीये द्वे च तृतीयेऽथ तान्यपि चतुर्थे ।
एवं यावदुपान्त्यं कुर्यात्त्वेव हि भूयोऽपि ॥ ९ ॥
यदधो भवन्त्युपान्त्यात्तत्प्रभृति पुनः क्रमान्निवर्तन्ते ।
एकद्वित्रिलघूनि प्रथमाद् गुरुणो भवन्त्येव ॥ १० ॥

---

तदुपरि येऽङ्काः सन्ति तैर्मिश्रितैः[1] पिण्डीकृतैर्यो राशिः[2] पिण्डीकरणमङ्काना भवति गतैस्तावद्भिः प्रस्तारविधौ तद्वृत्त भवति यथा—षडक्षरस्य वृत्तस्य तनुमध्या कातियं वृत्तं भवतीति पर्यनुयोगे सत्युच्यते । तनुमध्याया द्वौ लघू विद्येते तदुपरिवर्तिनावङ्कौ चतुरष्टकौ[3] मिश्रीकृत्य[4] द्वादश भवन्ति तैरपगतैः त्रयोदशी[5] वृत्तजातिस्तनुमध्या संपद्यते ॥ ६ ॥ ७ ॥ यावन्तीति 'यत्तदेतेभ्यः परिमाणे वतुप्' (पा० ५-२-३९) । यावन्ति यत्परिमाणानि वृत्ताक्षराणि तावन्ति तत्परिमाणान्यथ एकेनाक्षरेणाधिकतराणि कार्याणि । आदौ प्रथम तेषा वृत्ताक्षराणामूर्ध्वक्रमेण रूपाण्यङ्कान्[6] विन्यस्यानन्तरमाद्यमेकमङ्के द्वितीये एकस्मिन् अङ्के निक्षिपेत् तेन सहैकीकुर्यादित्यर्थः । एवं तद्वदेव उपान्त्यमन्त्यसमीप यावत्कुर्यात् । एवं भूयः पुनः पुनरपि । उपान्त्यादन्त्यसमीपादधोऽधो यद्भवति तत्तत्प्रभृति ततस्तत आरभ्य क्रमात्क्रमान्निवर्तन्ते रूपाणि न मिश्रीकार्याणीत्यर्थः । एव स्थिते सति[7] प्रथमात्प्रथमाद्गुरुणोनन्तरमेकद्वित्रिलघूनि भवन्ति । यच्च तत्प्रथम तत्सर्वगुर्वात्मकम् । लघुशब्द उपलक्षणार्थः । तेन अधस्तनादेकस्मात् ऊर्ध्वक्रमेण एकद्वित्रिगुरूणि भवन्ति । अधस्तनं तु सर्वलघुरूपम् । प्रथमाधस्तनयोश्च वृत्तयोः यथाक्रमं सर्वगुरुरूपता सर्वलघुरूपता च प्रस्तारविधावुपदर्शिता । षडक्षरस्य वृत्तस्योर्ध्वक्रमेण केवलाना मिश्रीभूताना च रूपाणा प्रस्तारः । अयं ऊर्ध्वक्रमेण केवलाना मिश्रीभूतानामप्यङ्काना प्रस्तारः समुपदर्शितः । एव प्रारम्भे वृत्त सर्वगुरु; अन्ते च सर्वलघु; मध्ये षडेकलघूनि द्विलघूनि पञ्चदश त्रिलघूनि विंशतिः । तथा षडेकगुरूणि, द्विगुरूणि पञ्चदश, त्रिगुरूणि विंश-

---

१ मिश्रितैः B; २ राशि. A, B, ३ वङ्काचतुष्टाककौ A; B; ४ मिश्री B; ५ त्रयोदसी B; ६ रूपान्यङ्कान् A; B; ७ स्यति B; ८ विंसतिश्च B.

एष्वेव पिण्डितेषु च सख्या प्रस्तारविरचिता भवति ।
उद्दिष्टविधानाङ्कैः सैकैर्मिश्रीभवन्त्यथवा ॥ ११ ॥
द्वाभ्यां समाहृता संख्या रूपेणैकेन वार्जिता ।
छिन्नवृत्ताङ्गुलव्याप्तिरध्वयोगः प्रकीर्तितः ॥ १२ ॥

॥ इति जयदेवच्छन्दसि अष्टमोऽध्यायः ॥

तिश्च वृत्तस्य षडक्षरस्य भवन्ति । क्व तर्हि तानि दृश्यन्ते इत्याशङ्क्योयमुपदर्शयते[२] प्रस्तारः[३] ॥ ॥ ८ ॥ ९ ॥ १० ॥ पूर्वोदाहृतस्यैव षडक्षरस्य वृत्तस्य एष्वेव[४] एकद्वित्रिलघुप्रदर्शनोपयोगिष्वङ्केषु एकषट्पञ्चदशविंशतिपञ्चषडेकाख्येषु पिण्डितेषु मिश्रीकृतेषु सत्सु चतुःषष्ट्याख्या संख्या भवति कीदृशी । प्रस्तारेण गुरुलघुविन्यासेन विरचिता । अथवा उद्दिष्टविधानाङ्कैः एकाद्विचतुरष्टषोडशद्वात्रिंशद्रूपैः सैकैः एकाधिकैः मिश्रैः[५] पिण्डीकृतैः सैव चतुःषष्ट्याख्या संख्या भवति ॥ ११ ॥ षडक्षरस्य वृत्तस्य चतुःषष्ट्याख्या संख्या द्वाभ्या समाहृता द्विगुणिता अष्टाविंशं[६] शतमित्यर्थः । एकेन रूपेणाङ्केन वर्जिता शून्या[७] शतं[८] सप्तविंशत्यधिकमित्यर्थः । एवंविधोऽध्वयोगः अध्वसंबन्धः प्रकीर्तितः । कीदृशः । च्छिन्नवृत्तं गुरुलघुसमुदायो यस्याः तादृशी अङ्गुलमानेन व्याप्तिरङ्गुलव्याप्तिः यस्य स तथोक्त इति सिद्धम् ॥ १२ ॥

[ इति ] भट्टमुकुलकात्मजहर्षटविरचितायां जयदेवच्छन्दोविवृतावष्टमोऽध्यायः ॥ समाप्तं जयदेवच्छन्दोविवरणम् । -

१ त्यासंक्या B, २ उपदर्शति A: उपदर्शते B, ३ Graphical representation of the Prastāra of the Chandas with 6 letters given in the mss. is dropped. ४ एषु dropped in A, ५ मिश्रै. B, ६ अष्टाविंशतमित्यर्थः A, ७ स्तन्या B, ८ सतं B.

# अथ जयकीर्तिकृतं छन्दोनुशासनम्

## प्रथमोऽधिकारः†

श्रीवर्धमानमानम्य छन्दसां पूर्वकारणम् ।
लक्ष्यलक्षणमालोक्य वक्ष्ये छन्दोऽनुशासनम् ॥ १ ॥
छन्दःशास्त्रं यदिदं तद्धि विज्ञोः काव्यसागरम् ।
छन्दोभाग् वाङ्मयं सर्वं न किंचिच्छन्दसा विना ॥ २ ॥
नागरककारयुतो गुरुर्द्विमात्रो वक्रको ज्ञेयः ।
लघुरेकमात्रिकः स्यादृजुरङ्गुलनिभो लसंज्ञश्च ॥ ३ ॥
दीर्घो गुरुः प्लुतोऽपि ह्रस्वो लघुरेव वा गुरुः पादान्ते ।
संयोगविसर्गानुस्वारव्यञ्जनपरो गुरुः स्याद् ह्रस्वः ॥ ४ ॥
संयोगपरोऽपि जातु वर्णः
शैथिल्याल्लघुतामुपैति तस्मात् ।
भाषाविषयेऽन्यथा जगद्वा—
एदोतौ तु गुरू लघू च दृष्टौ ॥ ५ ॥
मयरसतजभनवर्गा भूर्नीरानलमरुन्नभोऽर्केन्दुदिवः ।
वृत्तगणाः क्रमशोऽष्टौ सन्तीह विद्धि मध्यमच्छन्दःसि तान् ॥ ६ ॥
गुरोरधस्ताल्लघुमादितः क्षिपेत्
परं लिखेदूर्ध्वसमं पुनस्तथा ।
पश्चात्स्वखण्डं गुरुणा प्रपूरयेत्
यावद्गणः सर्वलघुस्त्ववाप्यते ॥ ७ ॥
सर्वगुरुर्मगणः क्षितिरादिलघुर्यः पयोगणो ज्ञेयः ।
मध्यलघू रोऽग्निः स्यादन्तगुरुः सो मरुन्नाम्ना ॥ ८ ॥
अन्तलघुस्तगणः खं मध्यगुरुर्जगण उच्यते सूर्यः ।
आदिगुरुर्भश्चन्द्रः सर्वलनः स्वस्तिकाः सर्वेऽपि ॥ ९ ॥
वाग्विरामो यतिः स्यात्संस्थाप्यते श्रुतिसुन्दरम् ।
पादान्ते सूचितस्थाने युक्पादान्ते विशेषतः ॥ १० ॥

---

† Obvious mistakes of the scribe are corrected; the Avagraha is regularly marked though the scribe does not do so. The same is true of Sandhis.

एष्वेव पिण्डितेषु च संख्या प्रस्तारविरचिता भवति ।
उद्दिष्टविधानाङ्कैः सैकैर्मिश्रीभवन्त्यथवा ॥ ११ ॥
द्वाभ्यां समाहृता संख्या रूपेणैकेन वार्जिता ।
छिन्नवृत्ताङ्गुलव्याप्तिरध्वयोगः प्रकीर्तितः ॥ १२ ॥

॥ इति जयदेवच्छन्दसि अष्टमोऽध्यायः ॥

तिश्च वृत्तस्य षडक्षरस्य भवन्ति । क्व तर्हि तानि दृश्यन्ते इत्याशङ्क्यायमुपदर्शयते[2] प्रस्तारः[3] ॥ ॥ ८ ॥ ९ ॥ १० ॥ पूर्वोदाहृतस्यैव षडक्षरस्य वृत्तस्य एष्वेव[4] एकद्वित्रिलघुप्रदर्शनोपयोगिष्वङ्केषु एकषट्पञ्चदशविंशतिपञ्चषडेकाख्येषु पिण्डितेषु मिश्रीकृतेषु[5] सत्सु चतुःषष्ट्याख्या संख्या भवति कीदृशी । प्रस्तारेण गुरुलघुविन्यासेन विरचिता । अथवा उद्दिष्टविधानाङ्कैः एकद्विचतुरष्टषोडशद्वात्रिंशद्रूपैः सैकैः एकाधिकैः मिश्रैः[5] पिण्डीकृतैः सैव चतुःषष्ट्याख्या संख्या भवति ॥ ११ ॥ षडक्षरस्य वृत्तस्य चतुःषष्ट्याख्या संख्या द्वाभ्या समाहृता द्विगुणिता अष्टाविंशं[6] शतमित्यर्थः । एकेन रूपेणाङ्केन वर्जिता शून्या[7] शतं[8] सप्तविंशत्यधिकमित्यर्थः । एवंविधोऽध्वयोगः अध्वसम्बन्धः प्रकीर्तितः । कीदृशः । च्छिन्नवृत्त गुरुलघुसमुदायो यस्याः तादृशी अङ्गुलमानेन व्याप्तिरङ्गुलव्याप्तिः यस्य स तथोक्त इति सिद्धम् ॥ १२ ॥

[इति] भट्टमुकुलकात्मजहर्षटविरचितायां जयदेवच्छन्दोविवृतावष्टमोऽध्यायः ॥ समाप्तं जयदेवच्छन्दोविवरणम् ।

१ त्यासक्या B, २ उपदर्शति A, उपदर्शते B, ३ Graphical representation of the Prastāra of the Chandas with 6 letters given in the mss. is dropped. ४ एषु dropped in A; ५ मिस्रै. B, ६ अष्टाविंशतमित्यर्थ. A; ७ स्तन्या B; ८ सतं B.

# अथ जयकीर्तिकृतं छन्दोनुशासनम्

## प्रथमोऽधिकारः†

श्रीवर्धमानमानम्य छन्दसां पूर्वमक्षरम् ।
लक्ष्यलक्षणमावीक्ष्य वक्ष्ये छन्दोऽनुशासनम् ॥ १ ॥

छन्दःशास्त्रं वहित्रं तद्विविक्षोः काव्यसागरम् ।
छन्दोभाग् वाङ्मय सर्वं न किंचिच्छन्दसा विना ॥ २ ॥

नागरङ्ककारवक्रो गुरुर्द्विमात्रो गसंज्ञको ज्ञेयः ।
लघुरेकमात्रिकः स्यादृजुरूर्ध्वाङ्गुलनिभो लसंज्ञश्च ॥ ३ ॥

दीर्घो गुरुः प्लुतोऽपि ह्रस्वो लघुरेप वा गुरुः पादान्ते ।
संयोगविसर्गानुस्वारव्यञ्जनपरो गुरुः स्याद् ह्रस्वः ॥ ४ ॥

संयोगपरोऽपि जातु वर्णः
शैथिल्याल्लघुतामुपैति तस्मात् ।
भापाविपयेऽन्यथा जगद्वा—
ण्येदोदौ तु गुरू लघू च दृष्टौ ॥ ५ ॥

मयरसतजभनवर्णा भूतोयानलमरुन्नभोऽर्केन्दुदिवः ।
वृत्तगणाः क्रमशोऽष्टौ प्रस्तारे विद्धि मध्यमच्छन्दसि तान् ॥ ६ ॥

गुरोरधस्ताल्लघुमादितः क्षिपेत्
परं लिखेदूर्ध्वसमं पुनस्तथा ।
पाश्चात्यखण्डं गुरुणा प्रपूरयेत्
यावद्गणः सर्वलघुत्वमाप्यते ॥ ७ ॥

'सर्वगुरुर्मगणः क्षितिरादिलघुर्यः पयोगणो ज्ञेयः ।
मध्यलघू रोऽग्निः स्यादन्तगुरुः सो मरुन्नाम्ना ॥ ८ ॥

अन्तलघुस्तगणः खं मध्यगुरुर्जगण उच्यते सूर्यः ।
आदिगुरुर्भश्चन्द्रः सर्वलनः स्वस्त्रिकाः सर्वेऽपि ॥ ९ ॥

वाग्विरामो यतिः स्यात्संस्थाप्यते श्रुतिसुन्दरम् ।
पादान्ते सूचितस्थाने युक्पादान्ते विशेपतः ॥ १० ॥

---

† Obvious mistakes of the scribe are corrected; the Avagraha is regularly marked though the scribe does not do so. The same is true of Sandhis.

सन्धिविकारः समभर इत्येकोऽर्थस्तथेष्यतेऽत्र विरामः ।
लुप्तविभक्तिकपदमिति समासपदमुच्यते यथा तत्र यतिः ॥ ११ ॥
सद्यारित्राण्यघकुञ्जहराण्यर्हतोऽन्यत्र न स्युः
तत्रैवाप्तप्रवचनपदार्थाश्च युक्त्या घटन्ते ।
तस्मात्तन्निश्चितमिति विनेयाः श्रयन्त्यात्मयन्तो
यत्युक्तोदाहरणमिदमित्यादिरस्ति प्रयोगः ॥ १२ ॥
वाञ्छन्ति यतिं पिङ्गलवसिष्ठकौण्डिन्यकपिलकम्बलमुनयः ।
नेच्छन्ति भरतकोहलमाण्डव्याश्वतरसैतवाद्याः केचित् ॥ १३ ॥
पृथग्विधानाद्रचनाविशेषः
फलं कवेर्लक्षणमाद्यमेव ।
प्राग्वद्यतिर्नाम च नान्यथात्र
लोकप्रसिद्धौ न कुतो विवादः ॥ १४ ॥
उक्तमेकाक्षरं छन्दोऽत्युक्तं तद्द्व्यक्षरं तथा ।
मध्यमं त्र्यक्षरं छन्दः प्रतिष्ठा चतुरक्षरी ॥ १५ ॥
सुप्रतिष्ठा पञ्चाक्षरी गायत्री तु षडक्षरी ।
उष्णिक् सप्ताक्षरी ज्ञेयानुष्टुबष्टाक्षरी ततः ॥ १६ ॥
बृहती नवाक्षरी स्यात्पङ्क्तिस्तु दशाक्षरी ततस्त्रिष्टुप् ।
एकादशाक्षरीत्यपि शेषाश्चैकैकवृद्ध्या स्युः ॥ १७ ॥
जगती तथातिजगती शक्वर्यतिशक्वरी ततश्चाष्टिः ।
अत्यष्टिर्धृतिरतिधृतिरतः कृतिः प्रकृतिराकृतिर्विकृतिश्च ॥ १८ ॥
संकृतिरभिकृतिरुत्कृतिरिति षड्विंशतिरनुक्रमाच्छन्दांसि ।
वृत्तानीह भवन्ति हि षड्विंशति तत्परं तु मालावृत्तम् ॥ १९ ॥
वृत्तं जातिरिति द्वेधा पद्यं तत्तु चतुष्पदी ।
गणबद्धं तथा वृत्तं जातिर्मात्रागणाश्रिता ॥ २० ॥
वृत्तं सममर्धसमं विषमं मालाख्यमिति चतुर्धा; जातिः ।
आर्या मात्रासमकं वैतालीयं द्विपथपीति चतुर्धा ॥ २१ ॥
संस्कृतवाच्यार्याद्या. प्राकृतविषये तु गलितकाद्या बहुधा ।
कर्णाटकेऽक्षराद्या विषये ×‡× शीर्षकादिजातय उदिताः ॥ २२ ॥

‡ One long or two short letters are missing.

दण्डकाश्चण्डवृष्टयाद्याः पादांगनियमोदिताः ।
अपादनियमाश्चोक्ता गणधा गद्यदण्डकाः ॥ २३ ॥
स्वच्छन्दःसंज्ञा रघटा मात्राक्षरसमोदिताः ।
पादद्वन्द्वसमाकीर्णा सुश्रव्या सैव पद्धतिः ॥ २४ ॥
पादा(र. दो ऽ)क्षरमात्रानियमोदितपिण्डोऽथ पादवत्पद्यं स्यात् ।
पादद्वितीयवर्णः पादं पादे च यति सोऽनुप्रासः ॥ २५ ॥
गद्यं हृद्यमपादोक्तिसमासपदसंचितम् ।
ततोऽन्यच्चूर्णिरित्युक्ता वचनं वाक्यबन्धुरम् ॥ २६ ॥
सममेकेन द्वाभ्यामर्धसमं दृश्यते चतुर्भिः पादैः ।
विषमं जातिश्च तथा प्रस्तारप्रत्यये यथा तद्व्याप्तिः ॥ २७ ॥
एकद्वित्र्यादिसंख्यार्थं चन्द्रनेत्रपुरादिकम् ।
छन्दोऽर्थं गृह्यते लोकान्नाप्रयुक्तं प्रयुज्यते ॥ २८ ॥
॥ इति जयकीर्तिकृतौ छन्दोऽनुशासने संज्ञाधिकारः प्रथमः ॥

## द्वितीयोऽधिकारः

योऽर्हन्सोऽव्यात् ॥ १ ॥ उक्ते गे श्रीः ॥ २ ॥ लि नु खिहि ॥ ३ ॥ विध्यत्युक्ते । गौ चेत्पद्मम् ॥ ४ ॥ लगौ यदा । तदा सुखम् ॥ ५ ॥ ग्ले तु यत्र । जातु जन्तु ॥ ६ ॥ लिलि सति । वलिरिति ॥ ७ ॥ मे मध्ये धीमन्तः । श्यामाङ्गीं तामाहुः ॥८ ॥ वनं चेन्मनोज्ञं । मनोहृज्जनानाम् ॥ ९ ॥ रे सुधीर्भासते । सा सुधी धीमताम् ॥ १० ॥ पवने प्रवरं । प्रविदुः प्रवराः ॥ ११ ॥ तेनैव सेनेति । केनाप्यमानीह ॥ १२ ॥ रवौ तु रुधीह । सुविद्धि सुवस्तु ॥ १३ ॥ यद्यविभोय च । हृद्यमिहोद्यति ॥ १४ ॥ नगणयुगथ । द्रगिति जगति ॥ १५ ॥ प्रातिष्ठेयी । गीतिर्मोद्रः ॥ १६ ॥ यगौ वृद्धिः ॥ १७ ॥ रादूगि चर्द्धिः ॥ १८ ॥ सुमतिः सौ ॥ १९ ॥ तारा तगौ ॥ २० ॥ जगौ जया ॥ २१ ॥ भगौ सुमुखी ॥ २२ ॥ मधु नगौ ॥ २३ ॥ यष्ठी माहि ॥ २४ ॥ यलौ सद्म ॥ २५ ॥ वर्त्म राहि ॥ २६ ॥ कदली रिल ॥ २७ ॥ ताहि त्रपु ॥ २८ ॥ जपा जलि ॥ २९ ॥ भाहि जतु ॥ ३० ॥ नलि दधि ॥ ३१ ॥ सुप्रतिष्ठायाम् ।

राद्गुरू प्रीतिः ॥ ३२ ॥ किंच भगौ गः । काञ्चनमाला ॥ ३३ ॥ राल्गौ श्रुति. ॥ ३४ ॥ सती जगौ गः ॥ ३५ ॥ शर्म भलगाः ॥ ३६ ॥ नन्दा तलगैः ॥ ३७ ॥ सल्गै रमा ॥ ३८ ॥ तिष्ठद्गु ताद्गौ ॥ ३९ ॥ सुदती साद्गौ ॥ ४० ॥ नलगि धृतिः ॥ ४१ ॥ गायत्र्यां तटी न्यौ ॥ ४२ ॥ मौ चेत्सावित्री स्यात् ॥ ४३ ॥ त्यौ चेत्तनुमध्या ॥ ४४ ॥ कामललिता भ्यौ ॥ ४५ ॥ कनकलता न्यौ ॥ ४६ ॥ मात्सश्चेन्मुकुलम् ॥ ४७ ॥ मणिरुचिर्नरौ ॥ ४८ ॥ यदि सौ कुमुदम् ॥ ४९ ॥ यदा यौ द्रुतं स्यात् ॥ ५० ॥ हंसमाला रसौ ॥ ५१ ॥ उष्णिहि भलग्धुनी ॥ ५२ ॥ भौ गपरौ कलिका ॥ ५३ ॥ मौ गश्चेद्गान्धर्वी स्यात् ॥ ५४ ॥ तात् सौ भ्रमरमाला ॥ ५५ ॥ कुमारललिता ज्सौग् ॥ ५६ ॥ माद् भो गश्चेत्सरलम् ॥ ५७ ॥ नोमिनीह राज्गौ ॥ ५८ ॥ चित्रमिह भनगैः ॥ ५९ ॥ ननगिह लटह ॥ ६० ॥ भसौ गिह मदलेखा ॥६१॥ आनुष्टुभि ताज्लगाः ॥ ६२ ॥ स्रौ ल्गौ चेद्वक्ष्यते क्षमा ॥ ६३ ॥ मौ गौ चेत्सा विद्युन्माला ॥ ६४ ॥ प्रमाणिका जरौ लगौ ॥ ६५ ॥ रात् ज्लैः समान्यमानि ॥ ६६ ॥ भौ च गुरू च वितानम् ॥ ६७ ॥ चित्रपदा कचिदेतत् ॥६८॥ माणवकं भात्तलगाः ॥ ६९ ॥ नाराचकं तरौ लगौ ॥ ७० ॥ तौ गौ यदा केतुमाला ॥ ७१ ॥ नरलगै. सुमालती ॥ ७२ ॥ बृहत्यां बृहत्यं त्रयो याः ॥७३॥ मात् त्यौ स्तश्चेत् सुन्दरलेखा ॥ ७४ ॥ बृहतीजमक्षि सजसैः ॥ ७५ ॥ रान्नसौ खलु हलमुखी ॥७६॥ जतौर्यदा चारुहासिनी ॥७७॥ भुजगशिशुसृतं नौ मः ॥७८ ॥ चिच्युदयमत्र भजसैः ॥ ७९ ॥ भौ रपरौ तदनूत्सुकम् ॥ ८० ॥ भद्रिका भवति रान्नरौ ॥ ८१ ॥ ननरयुतमुपच्युतम् ॥ ८२ ॥ गाथा मात्सयुगे कथिता ॥ ८३ ॥ पङ्क्तौ शुद्धविराण् मसौ जगौ ॥ ८४ ॥ मान्यौगः पणवकमाह ज्ञः ॥ ८५ ॥ रुक्मवतीयं भाति भमसैः ॥ ८६ ॥ मत्ता माङ्कः सगुरुपरश्चेत् ॥ ८७ ॥ त्यौ स्गाविति चेत्सा मदिराक्षी ॥ ८८ ॥ भत्रितयाद्गिति चित्रगति. ॥ ८९ ॥ रेफसद्वयगैर्मणिरङ्गः ॥ ९० ॥ भौ मगुरू यदि बन्धूकाख्यम् ॥९१॥ स्यान्मयूरसारिणी

रजौ गौं ॥ ९२ ॥ मौक्तिकं रयौ चेज्जगोत्तरौ ॥ ९३॥ नजनगाधृत्त्वरितगतिः ॥ ९४ ॥ हंसक्रीडा मभभा गयुताः ॥ ९५ ॥ त्रिष्टुप्छन्दसि मात्सजौ मणि गौं ॥ ९६ ॥ दोधकमत्र तु भत्रितयाद्गौ ॥ ९७ ॥ स्वागता यदि रनौ भगुरू गः ॥ ९८ ॥ रान्नरौ लगयुतौ रथोद्धता ॥ ९९ ॥ विश्रामोऽब्धौ शालिनी मेन तौ गौ ॥ १०० ॥ मात् भनौ लगौ चेत् भ्रमरविलसितम् ॥ १०१ ॥ श्रेणिरभ्यभाणि राज्जरौ लगौ ॥ १०२ ॥ ताज्जौ ग्गुरुर्णवमुपस्थिता स्यात् ॥ १०३ ॥ ननरलगयुतैव भद्रिका ॥ १०४ ॥ सभरल्गैरपरान्तिका भवेत् ॥ १०५ ॥ द्विनगणसगयुगभाग् वृन्दा ॥१०६॥ अच्युत रससल्गुरुणोच्यते॥१०७॥ तौ तश्च गौ चेल्लयग्राहिसंज्ञा ॥१०८॥ सान्द्रपदं भात्तनगगिपौ खम् ॥ १०९ ॥ स्यान्मोटकमत्र तजौ जलगाः ॥ ११० ॥ वातोर्मी माद्भतगा गेन युक्ता ॥१११ ॥ वातोर्मी माद्भभगाश्च सुरूपा ॥ ११२ ॥ म्सौ ज्गौ गो रसखं सदैकरूपम् ॥ ११३ ॥ नयभगगाश्चेच्छ्रीः पतिता च ॥ ११४ ॥ तौ जेन गौ चेदियमिन्द्रवज्रा ॥११५॥ उपेन्द्रवज्रा जतजा गुरू चेत् ॥ ११६ ॥

उपेन्द्रवज्रास्फुरदिन्द्रवज्रा-
पादौ विमिश्रौ यदि तौ भवेताम् ।
नानाविकल्पैरुपजातिरेषा
प्रकल्पितार्यैः क्वचिदिन्द्रमाला ॥११७॥

जगत्यां चतुर्य भुजङ्गप्रयातम् ॥११८॥ कामावतारस्तकारैश्चतुर्भिस्तु ॥११९॥ रैश्चतुर्भिर्मता वाग्विदैः स्रग्विणी ॥ १२० ॥ इह तोटकमाह चतुःसचितम् ॥ १२१ ॥ चतुर्जगणं यदि मौक्तिकदाम ॥१२२॥ द्रुतविलम्बितमत्र नभौ भरौ ॥ १२३ ॥ मौ यौ पञ्चाश्वैर्विश्रमो वैश्वदेवी ॥ १२४ ॥ प्रमिताक्षरा सजगणौ यदि सौ ॥ १२५ ॥ माद्भश्च स्मौ जलधरमालाब्धौ (r. ब्धौ ) खम् ॥१२६॥ स्नौ जसजसा जलोद्धतगतिः ॥१२७॥ स्फुटसुरगयतिर्नौम्यौ पुट स्यात् ॥ १२८ ॥ अथ नवमालिनी यदि नजौ भ्यौ ॥ १२९ ॥ प्रमुदितवदनाथ नौ रौ च चेत् ॥ १३० ॥ चन्द्रवर्त्म भवतीह

रसैः ॥ १३१ ॥ नभजयश्चे मुखरं कलहंसा ॥ १३२ ॥ नभभैरे-
ते मत्तकोकिलम् ॥ १३३ ॥ ऋतुविरतिन्यौ गजललिता न्यौ ॥१३४॥
तपदा भरतस्य नजौ ज्यौ ॥ १३५ ॥ मादृश्रौ यः खं पुरधाम्नि
रीकम् ॥ १३६ ॥ शिविका सयौ स्यौ च महेन्द्रव्रज्रा ॥ १३७ ॥
तौ मणिमाला क्वाप्यन्जविचित्रा ॥ १३८ ॥ वरतनुरत्र नजौ जरौ तु
॥ १३९ ॥ भात्तनसैः स्यात् रतिरिपुविरतिः ॥ १४० ॥ भवति
यैस्तु कामदत्ता ॥ १४१ ॥ गतियतिर्द्रुतपदा न्भजयैः स्यात् ॥ १४२ ॥
न्ति वंशस्थमिदं जतौ जरौ ॥ १४३ ॥ स्यादिन्द्रवशा यदि तौ जरौ
॥ १४४ ॥

यत्रेन्द्रवंशाचरणो युनक्ति चे—
द्वंशस्थपादेन सहेत्यनेकधा ।
करम्बजातिर्भवतीह सा क्वचित्
कुलालचक्रं क्व च वंशमालिका ॥ १४५ ॥

॥ श्रुतिर्गतियतिभात्तभौ स्यौ ॥ १४६ ॥ कृतोद्यतिः स्मृतिरिति
सौ यः ॥ १४७ ॥

श्रुत्यंह्रिणा स्मृतिचरणो यथास्वं
नियुक्ति चेदिह बहुभिर्विकल्पैः ।
यदा समार्द्धसमनियामतोऽन्यत्
सिंहप्लुतं मुनिदमसागरोक्तम् ॥ १४८ ॥

तेजगत्यां नतौ तौ गुरुः कौमुदी ॥१४९॥ म्नौ म्रौ गः पुरविरतिः प्रह-
णी स्यात् ॥ १५० ॥ विश्रामौब्धौ ( r. मोऽधौ ) मत्तमयूरं मतयाः
१५१ ॥ कुटजं वदन्ति कवयः सजससैः ॥ १५२ ॥ यमौ रौ गः
विश्रमश्चन्द्रिका स्यात् ॥ १५३ ॥ लक्ष्मीर्भवेत्तभसजगैर्यतिः श्रुतौ
१५४ ॥ नजनसगैरपि मदललिता स्यात् ॥ १५५ ॥ नजसजगैर्भवति
सुभाषिणी ॥ १५६ ॥ भ्रमरी सजौ च ससगाश्च यदि स्युः ॥१५७॥
णिकुण्डलं स्यौ सजगान्वितौ यदा ॥ १५८ ॥ सजसा जगाविति जया-
नन्दिनी ॥ १५९ ॥ नजजरगैरचलं क्वचित्सुवक्त्रा ॥ १६० ॥ गन्त-

भकारचतुष्कयुताङ्गरुचिः ॥ १६१ ॥ नलिनमनलयति नौ सजौ गुरुः ॥ १६२ ॥ जभौ सजौ गिति रुचिराब्धिविश्रमा ॥ १६३ ॥ वेदोद्यतिस्तभसजगै रुचिस्तदा ॥ १६४ ॥

पादौ यदा रुचिरुचिरोद्भवाविमौ
विमिश्रितौ यदि भवतः कवीच्छया ।
समाक्षरं गणविपरीतलक्षणं
छन्दश्चितौ भवति तदा प्रकीर्णकम् ॥ १६५ ॥

शक्वर्यां म्रौ च तौ गौ चन्द्रशालाद्रियत्याम् ॥१६६॥ हंसश्यामा मभनयगगभाक् खं चाब्धौ ॥ १६७ ॥ भाद्भवति हि लक्ष्मीः सात् ततौ गौ च रुद्रा ॥ १६८ ॥ प्राहुर्वसन्ततिलकां तभजा जगौ गः ॥ १६९ ॥ यदि मुनिविरतिर्नौ च तौ गौ वसन्तः ॥ १७० ॥ प्रथिता सजस्यलगभाक् तराङ्कैर्यतिः ॥१७१॥ यतियतिरपराजिता ननरस्लगाः ॥१७२॥ प्रहरणकलिका ननभनलघुगैः ॥ १७३ ॥ सजनलगाः शरविरतिः सुदर्शना ॥ १७४ ॥ मणिकटिकं स्फुटं नजभजैः सलगैः ॥ १७५ ॥ मात् त्नौ सौ गश्चेद्व्रतविरतिरसंबाधा ॥ १७६ ॥ रविमितलघुगुरुयुगमुपचित्रम् ॥ १७७ ॥ दर्दुरकं भगणद्वयेन रसौ लगौ ॥ १७८ ॥ भाज्जसनगा यदि गुरुर्वनमयूरः ॥ १७९ ॥ शोभते वनलता रनभा भगुरू गः ॥ १८० ॥ सभसा ज्गौ गिति गविविश्रमा सुनन्दा ॥ १८१ ॥ अतिशक्वरीज ऋषभः सजसाः सयौ चेत् ॥ १८२ ॥ लसति वसुविरामा मालिनी नौ मयौ यः ॥ १८३ ॥ निधलगुरुमनुलघुरिति शशिकला ॥ १८४ ॥ स्रगिति भवति रसविरतिरथ च सा ॥ १८५ ॥ + णियतियुगपि च मणिगुणनिकरा ॥ १८६ ॥ द्वयमभि गतिगतियतिरिह रुचिरा ॥ १८७ ॥ मौ मौ मोऽब्धौ त्रिर्विश्रामं ज्योतिः केषां मित्रं स्यात् ॥ १८८ ॥ नजभजरा भवन्ति यदि वसुकेसरम् ॥ १८९ ॥ रज्जरौ जरौ यदा महोत्सवो गतागतम् ॥ १९० ॥ सुन्दरं त्विह रनौ भभरा मणिभूषणम् ॥ १९१ ॥ नंजजभैररविन्दकं कलभाषिणी ॥ १९२ ॥ मण्डूकीयं तुर्येऽश्वर्यं विश्रमो मौ मयौ यः

॥ १९३ ॥ मयूरललितं भवति जान् सनभयाश्चेन् ॥ १९४ ॥ चन्द्रलेखा-ष्टर्तुच्छेदा रों वो मयुक्तौ चेत् ॥ १९५ ॥ खं पुरं रनभभा स्युवा रमणीयकम् ॥ १९६ ॥ सजना नयौ विषमयविरवनिरेला ॥ १९७ ॥ अष्टिभवा भचतुष्कसगः स्मरशरमाला ॥ १९८ ॥ पद्ममुखीह् मपञ्चकर्णाः सुजनाग्रमथम् ॥ १९९ ॥ गतिर्यतिनभजजागिति मञ्जलमञ्जना ॥ २०० ॥ कमलदलमिषुविरति नौ नजसगा गश्चेन् ॥ २०१ ॥ अग्निनगै-र्मुनिः स्वमृपसगजविलसितम् ॥२०२॥ नरौ जरौ जगाविदं वदन्ति पञ्चचा-मरम् ॥२०३॥ नजभजरा भवन्ति गुरुणेति वाणिनी स्यात् ॥२०४॥ जयानन्दं यान्त्रौ सुललितमृतुच्छित्स्मरौ गः ॥ २०५ ॥ नयनयसाद्गः स्वरख(ग. क)-रत्नं चेद् भुवि कान्तम् ॥ २०६ ॥ नजरमभा गुरुश्च चिन्तामणिरिन्दुमुखी ॥ २०७॥ भाति हि भामिनी भरनमद्वयगैर्भुवने ॥२०८॥ ऋतुच्छेदोऽत्यष्टौ यमनसभलाद्गः शिखरिणी ॥२०९॥ मन्दाक्रान्ता गतिऋतुयतिर्माद्भनौ तौ च गौ चेत् ॥ २१० ॥ नसमरसलाद्गु(ग.द्गु)च्छेन्दोऽङ्गै गतौ च हरि-ण्यसौ ॥ २११ ॥ जसौ जसयला गुरुर्वसुयतिश्च पृथ्वी मता ॥ २१२ ॥ दिग्यति वंशपत्रपतितं भरनभनलगैः ॥ २१३ ॥ नजभजजलिगा वर्कित-मिदं भुवि नर्कुटकम् ॥ २१४ ॥ स्वरसविश्रमो यदि तदेव हि कोकि-लकम् ॥ २१५ ॥ शरविरतिरिपुनगणगिति वसुधारा ॥ २१६ ॥ दृगरवं त्वतिशायिनी ससौ जभजगा गुरुश्चेत् ॥ २१७ ॥ भूतौ मुक्तामाला यमनसतसत्रैव्यर्तुविरतिः ॥ २१८ ॥ मात्तौ यौ यश्चेत्कुसुमितलतावे-ल्लिता रं शराङ्गैः ॥ २१९ ॥ मालिकोत्तरमालिका रसजा भरंश्च गतागता ॥ २२० ॥ सवर्नार्यो ( ग. ना र्यौ ) यः शररसयतिर्भाति मन्दारमाला ॥ २२१ ॥ धूर्जटिविश्रमणं मणिमाला भाद्भौ भभसयुवौ ॥ २२२ ॥ गतिनिधियतिरिति नौ यदि सौ लौ पङ्कजमुक्ता ॥ २२३ ॥ भवति च वरदा द्वयं नौ च रौ रौ च केषां निशा ॥ २२४ ॥ सुरभिः पुरशरयोर्य-तिरिति सान्नजनभसाः ॥ २२५ ॥ अतिधृतौ नमराः सलौ जगुरू तदा वरलं स्मृतम् ॥ २२६ ॥ यमौ न्सौ रौ गु रम्भा रसरसयतिर्मेघविस्फूर्जिता

वा ॥२२७॥ भानूद्यति मात्सजौ सततगाः शार्दूलविक्रीडितम् ॥ २२८ ॥ दिग्विरामि रसौ सतजा ज्गौ शार्ङ्गि भवेच्च गतागतम् ॥ २२९ ॥ जसौ त्रिरमु( १. तु )कौ गुरुश्च रसयोर्यतिश्च रतिलीला ॥ २३० ॥ कृत्यां भूभृत्कुभृत्स्वं मरभनयभला गश्चेत्सुवदना ॥ २३१ ॥ वृत्तनाम वृत्तमत्र वर्तते यदा त्रिधा रजौ गलौ च ॥ २३२ ॥ सभरान्मौ यलगाश्चयोदशयतिर्मत्तेभविक्रीडितम् ॥ २३३ ॥ कामलता भरौ नभभरा ल्गिति चोत्पलमालिका क्वचित् ॥ २३४ ॥ भत्रितयाद्धरसाद्गुरू यदि भासते भुवि भासुरम् ॥ २३५ ॥ नभभगाः ससला गिति मुद्रा रुद्रयतिः क्वचिदुज्ज्वलम् ॥ २३६ ॥ रात्सपञ्चकमन्तलगं पुटभेदम(क ? )-मत्र गतागतम् ॥ २३७ ॥ म्रौ भ्नौ यौ यः प्रकृत्यां स्वरगिरिविरतिः स्रग्धरा नाम वृत्तम् ॥ २३८ ॥ नजभजजज्रि चित्रलतिका सति चम्पकमालिका क्वचित् ॥ २३९ ॥ नगणजकारचतुष्कभरैरपि रञ्जिता वनमञ्जरी ॥ २४० ॥ ललितगतिरिनवनभिखे तान्निनाख्यातायदामान्द्रीता ? ॥२४१॥ नं गणं त्रिरिह रं गणं त्विति तरङ्गपूर्वपदमालिका ॥२४२॥ पञ्चसप्त रसान्नजनभरं हरविरतिश्च गतागतम् ॥ २४३ ॥ आकृतिनाम्नि मद्रकमिदं हरियति भरौ नरौ नरनगाः ॥ २४४ ॥ सततान्नः सश्च रौ गः फणितुरगयतिः स्यान्महास्रग्धराख्या ॥ २४५ ॥ सप्तभिरन्तगभैर्भवतीति गतागतमत्र लताकुसुमम् ॥ २४६ ॥ नगणतो भजगणौ त्रिधा गुरुपरौ यदा मदनसायकः ॥ २४७ ॥ अथ विकृतौ नजौ भजभजा भलौग्हरयतिस्तदाश्वललितम् ॥ २४८ ॥ नगणजपट्कयलाद्विति हसगतिश्च महातरुणीत(द ?)यितम् ॥ २४९ ॥ मत्ताक्रीडं मौ त्नौ नौ न्लौ गुरुरपि च विषधरशरविरमणम् ॥ २५० ॥ चित्रकं क्व च रनौ त्रिधा रलगमत्र भात्युरुतरङ्गमालिका ॥ २५१ ॥ शङ्खाख्यमिदं भगवद्गदितं तगणाज्जगणाः षडतो लगुरू ॥ २५२ ॥ संक्रातिनाम्नि व्रतनगविरतिर्भात्तनसं भभनयमपि तन्वी ॥ २५३ ॥ इह ललितलता स्वरगिरिविरतिर्ननभनजननयशोभा ॥ २५४ ॥ हंसपदं स्याद्वाच्च गणाः स्युर्व्रतशरवसुयति मसभननान्यौ ॥ २५५ ॥ अथ महामदनसायको नगणतस्त्रिधा भजगणौ

रनैधनौ ॥ २५६ ॥ अभिकृतिभवमिति गतिन–स–पुरभग् हंसलयं भुजगाद्रियतिः ॥ २५७ ॥ क्रौञ्चपदं भास्तिच मसौ भ्नौ त्रिनगणगुरु शरशरवसुयतयः ॥ २५८ ॥ मत्तेभाख्यं मौ मौ मात् त्यौ मश्चान्ते गः स्याद्विश्रामोऽब्धौ चतुरस्मिन्बाणेऽप्येवम् ॥ २५९ ॥ उत्कृत्यां मौ त्नौ नौ रः स्लौ गुरुरपि फणिहरविरतिर्भुजङ्गविजृम्भितम् ॥ २६० ॥ मान्नाः पञ्भ (r. द्स) गयुगमपि निधिरसरसाविरमणमिदमपवाहाख्यम् ॥२६१॥ वसुवसुयतिरथ गुरुयुगपरवसुनयुगिति वनलतिका स्यात् ॥ २६२ ॥ नयनयनान्नत्रयमपि गौ चेद्रसरसवसुयतिरिति मकरन्दम् ॥ २६३ ॥ मनुविरतिर्नजौ भजगणत्रितयं भजला गुरुर्यदि सुधाकलशः ॥२६४॥ मालावृत्तं गतिवसुवसुयति मभरसमितनस–विकसितकुसुमम् ॥२६५॥ मालावृत्तं मालावृत्तेष्वथ वसुधूर्जटियत्तन्वी(r. त्तं धी ?)वं ख्यातं मौ तनभा मौ भ्मौ ॥२६६॥ गतिनगणभनभनसकलितं त्रिपदलितं तदनुयतिमिलितम् ॥ २६७ ॥ नसभनतजाङ्गी तसयभृदुपाङ्गी लसतीति तद्वद्ङ्गविरतिस्त्रिभङ्गी ॥ २६८ ॥ ननभनजननैर्नैनलगाभिह चेन्मुनिगिरिवसुयतिरिति मणिकिरणः ॥ २६९ ॥ त्रिवसुगयतिरथ नवनगणलागिह सुविहितगतिरिति भवति कला ॥ २७० ॥ वृत्तललितं ललितनृत्तमपि सुन्दरलयात्तवरनं भजसना भजसना भ्यौ ॥ २७१ ॥ नगणदशकमपि सगुरु सयति यदि सुगमरति लसति जगति लहरिका ॥ २७२ ॥ त्रिर्भनलमुपरि च विदुर्भयुतयगणमवनेर्भवति ललितपदगर्भोमिह चक्रे ॥ २७३ ॥ चित्रलयमविनिविडमत्र भुवि भनेनगणवत्त्रिरिदमिह बुध परत्र भनगुरुभाक् ॥ २७४ ॥ तरणिमितनगणलघुगुरव इह दिशि ककुभि हरिति खलु विरतिरिति भुवि ललितलतिका ॥ २७५ ॥

प्रायोऽक्षरसमान्याहुः क्वचिन्मात्रासमानि च ।
मालावृत्तानि पादेषु नात्याशब्ध(?)क्षरात्किल ॥ २७६ ॥

इति जयकीर्तिकृतौ छन्दोऽनुशासने समवृत्ताधिकारो द्वितीयः ।

## तृतीयोऽधिकारः ।

अथातोऽर्धसमं वक्ष्ये यत्प्रयोगानुसारि तत् ।
तदक्षरसमं हीनमधिकं चेति दृश्यते ॥ १ ॥
उपचित्रकमर्धसमेष्विदं
सौ सलगा यदि भौ भगुरू गः ॥ २ ॥
यत्र रुक्मार( ? )गणत्रितयाद्गौ
नजजयमप्यनु सा द्रुतमध्या ॥ ३ ॥
सह सत्रितयेन गुरुश्चेत्
भत्रितयेन च वेगवती गौ ॥ ४ ॥
ताज्जौ गुरुणाथ मात्सजौ गौ
भद्रैर्भद्रविराट् स्वभाणि वृत्तम् ॥ ५ ॥
सजसा भवन्ति गुरुणाथ
केतुमती भरौ यदि नगौ गः ॥ ६ ॥
आख्यानकी तौ जगणेन गौ चेत्
तथा जतौ जेन गुरुद्वयान्तौ ॥ ७ ॥
जतौ जगौ गस्ततजा गुरू चे—
दाख्यानकी स्याद्विपरीतपूर्वा ॥ ८ ॥
राज्जगौ जरौ लगौ
यदा तदा प्रवर्तकम् ॥ ९ ॥
लगपार–सकारगणैस्त्रिभि—
र्नभभरैस्तु गणैर्हरिणीप्लुता ॥ १० ॥
यदि ननरलगा नजौ जरौ
तदपरवक्त्रमकारि सूरिभिः ॥ ११ ॥
नगणयुगरयेण पुष्पिताग्रा
नजजरगैर्विदिता जिनव्रतांगैः ॥ १२ ॥
साभिधा यवध्वनेर्मतो (r. तुप् ) स्त्रियां हि
रजौ रजौ पुनर्जरौ जरौ च गश्चेत् ॥ १३ ॥

स्यादिह मानिनी दिशि यतिर्भरनभनलगाः ॥
नजभजना गणाः ससहिता यदि हरविरतिः ॥ १४ ॥
ससजा गुरुसंयुतास्ततः
सभरा लगौ च विबोधिता भवेत् ॥ १५ ॥
ससजा गुरुयुग्मसंयुताः स्युः
सभरा यश्च सुबोधिता प्रिया वा ॥ १६ ॥
भाति नरां भगणाभ्यां तलगौ—
र्नजनसगैरपि विलसितलीला ॥ १७ ॥
पुरमितनगणयमथ मौ गः ।
क्षान्तिः प्रोक्ता चूडेयम् ॥ १८ ॥
विपधरविरमणमुदधिनगणसा
यतियतिरुरुगी ननभनलघुगा ॥ १९ ॥
आमलकी भचतुष्टयमत्र तु ।
भत्रयगा गिति सैव च चुक्षा ॥ २० ॥
जतौ जरौ शंखनिधिस्तु तौ जरौ ।
श्रीपाल्यकीर्तीशमते सुनन्दिनी ॥ २१ ॥
तौ भौ तथा पद्मनिधिर्जतौ जरौ ।
स्वयम्भुदेवेशमते तु नन्दिनी ॥ २२ ॥
भामा भवेद्भुवि गतिमान्विरामा ।
तभौ यदा सयमथ जाद्भसौ यः ॥ २३ ॥
तथोदिता यतिरिह जाद्भसौ यः ।
ताद्भः सयावपि विपरीतभामा ॥ २४ ॥
चूडामणिस्तद्वयजा गुरू चेत् ।
प्रज्ञामहोदयमता तभजा जगौ गः ॥ २५ ॥
सलिलनिधिगुणितधरणिधरलघुरधिगतगुरुरयमसमचरणः ।
तदितर इति गुरुपरशिखिविहितलघुदशतययुतिरघटि स खलुशिखा ॥२६॥
व्यतिहतपरिगतयमयमभवनिखिलचरणसमुपजनितपदरचना ।

इयमिति भवति हि भुवि परिकुटिलचलननिगदनसदृशसमभिधा* ॥२७॥

इति जयकीर्तिकृतौ छन्दोऽनुशासने अर्धसमवृत्ताधिकारस्तृतीयः ॥

## चतुर्थोऽधिकारः ।

अथातो विषमं वक्ष्ये यत्प्रयोगानुसारि तत् ।
तत् त्रिधा लक्षणे दृष्टं समानोनाधिकाक्षरम् ॥ १ ॥
चतुरक्षरतो यश्चेन्नो चेदाद्यक्षरात्स्नौ तु ।
वक्त्रवद्विषमाणं तद्वक्त्रमानुष्टुभं भाति ॥ २ ॥
ओजयोर्येगणेनाब्धेर्युग्मयोर्जगणेन च ।
श्लोकेषु कथ्यते पथ्या श्रोत्रपथ्या यतस्ततः ॥ ३ ॥
जगणोऽब्धेर्यदौजयोर्यगणो युग्मयोश्चेत्थम् ।
विपरीतोक्तलक्षणाद्विपरीतादि पथ्या स्यात् ॥ ४ ॥
अब्धेरयुग्मचरणे नश्चेद्युग्मे यकारश्चेत् ।
यस्यां सापि तु चपलानुष्टुब्मध्ये भवत्येवम् ॥ ५ ॥
वक्त्रवद्विषमः पादः समे लघुश्चेत्सप्तमे ।
अनुष्टुब्विपुलास्वेवं पिङ्गलाचार्यविपुला ॥ ६ ॥
श्रुतिकान्तं लघौ सति प्रतिपादं तु सप्तमे ।
सुतरामत्र विबुधैर्मता सैतवविपुला ॥ ७ ॥
भवेद्यदाब्धेः परतो भकारः सर्वत्र तदा ।
भकारसंज्ञां विपुलां भणन्त्यनुष्टुब्निपुणाः ॥ ८ ॥
परतोऽब्धेर्यत्र रेफे परितः पादेषु दृष्टे ।
विपुलानां रेफसंज्ञा विपुला भवेत्तदानीम् ॥ ९ ॥
नकारोऽब्धेर्यदि भवेद्विषमांह्रौ युजि तथा ।
स्फुटं नकारविपुला विपुलाज्ञैरिति मता ॥ १० ॥
सर्वतश्चतुर्भ्यः परो यद्यसौ तकारो भवेत् ।
विपुलासु जातिष्वतस्तकारसंज्ञां तां विदुः ॥ ११ ॥
यकारोऽब्धेरयुक्पादे यदि कश्चिद्युजि गणः ।
कश्चिदोजे जो युज्येवं संकीर्णविपुला द्विधा ॥ १२ ॥

---

* The ms. adds the words खजा नाम hereafter.

यौ प्रथमे हि वक्त्रादौ नाद्यात्तावितिवारितौ ।
तौ क्वचिदपि दृश्येते लक्ष्येषु श्रुतिसुन्दरम् ॥ १३ ॥
द्वात्रिंशदक्षरो ग्रन्थः सोऽनुष्टुप् श्लोक इत्यपि ।
श्लोकस्तु गद्यते पद्यं पुण्यश्लोकैर्मनीषिभिः ॥ १४ ॥
प्रोक्तमनुष्टुभि वक्त्रं पथ्या विपरीतपथ्यया चपला ।
पिङ्गलसैतवविपुला भरनतविपुलाश्च संकीर्णा ॥ १५ ॥
प्रथमोऽयमष्टवर्णो ।
द्वादशवर्णो द्वितीयकः पादः स्यात् ।
षोडशवर्णोऽथ तृतीयो विंशत्यक्षरस्तुर्यो ।
यस्य तदेतत्पदचतुरूर्ध्वं नानागति त्रयोदशधा ॥ १६ ॥
तदनु सह तथा या ।
भवति यतिभूदियमिति पीडा ।
द्विगुरपरकलघुमयचरणचतुष्का ।
क्वचिदघटि पदरुचिरिह लिपिमितिरजनि तवेत् ॥ १७ ॥
प्रत्यादिरियमपि च ।
पीडा प्रतिचरणमुभयगुरु ॥
पूर्वत्र भवति सनुपरिगलघुविसृति ।
सा क्वाप्यनुपदरुचिरुचितलिपिपरिमितिरिति च ॥ १८ ॥
पादाक्षरमितिरस्याः ।
प्राग्वद् भवति ससुपपदपीडा ॥
आद्यन्तगुरुयुगसकललघुचरणासौ ।
क्वाप्येवमतिपदरुचिरतिरुचिरमृदुपदवृत्तिः ॥ १९ ॥
प्रथमशकल इह विपरीतौ ।
यदि पदरुचिपादौ ॥
चरणयुगमपरमपि भवति यथास्वं ।
प्रतिचरणकलितयतिरति पदरुचिकलिकासौ ॥ २० ॥
भूयोऽपि सदनुपदरुचिकलि-
कास्येयमिति भवति ॥

पौरस्त्यचरणयुगमिह खलु विचलति ।
पाश्चात्यचरणयुगमचलितमतिशयितमघटि ॥ २१ ॥
आदौ व्यतिहृतमतिपदरुच्याः ।
पादौ यदि विपरीतौ ॥
पादद्वितयमितरदिह भवति यथास्वं ।
स्यादित्यपि सुरुचिरयतिरतिपदरुचिकलिकाख्या ॥ २२ ॥
अपसरति पदरुचिविलग्नं ।
क्रमयुगलमथ न खलु चलति चतुर्थम् ॥
प्रथम इह तृतीयो ।
यदि भवति विकृतगतिरिति पदरुचिलवली स्यात् ॥ २३ ॥
स्यादेवमनुपदरुचिलवलि-
काख्या प्रतिचरणनियतगुरुलघुरपि ॥
पादन्यसनमिह तु ।
तद्वत्समनुभवति जगति सुनिश्चितपदविसृति ॥ २४ ॥
मध्यांह्रियुगलमतिपदरुच्याः ।
पूर्वं भवति; चरमचरण इह यथास्वम् ॥
आद्यंह्रिरथ तृतीयः ।
पद्येष्वियमपि च सयतिरतिपदरुचिलवली स्यात् ॥ २५ ॥
यदि भवति गदितपदरुच्याः ।
प्रथमतरचरण इह स खलु चतुर्थः ॥
त्रिचरणमुपसरति च पदरुचियुगमृतधारा ।
जितसदमृतधारा ॥ २६ ॥
आद्यंह्रिरनुपदरुचिवदिह ।
तुर्यो यदि भवति नियतगुरुलघुतति ॥
अन्यत्र चरणमघटि तदनुपदरुचियुगमृत- ।
धारेयमिति भवति ॥ २७ ॥
पादः प्रथम इह यदि तुरीयः ।
पादत्रयमनुसरति तदतिपदरुच्यो

पादैरसमगतिमिरतिपदरुचियुगममृतधारा ।
पादत्रकविभिरुक्ता ॥ २८ ॥
पदचतुरूर्ध्वो पीडा प्रत्यापीडा च भवति संपीडा ॥
कलिका लवली चामृतधारा तिस्रः पृथक् पृथक् त्रिधास्ताः ॥ २९ ॥
ओजपादेऽनुष्टुभो येय ( ९ ) मा जगत्या विवर्धिता ॥ ८ ॥
सा विजातिगाथा जम्बुककथा (११) पञ्चयत्यादिवदुच्यते (८) ॥ ३० ॥
अनुष्टुब् विषमाख्यानां षड्भिः पादैर्यथोदितैः ।
जातिगाथा भवत्येवमेनां तु च्छान्दसीं विदुः ॥
' दश धर्मं न जानन्ती ' त्यादेरादिप्रयोगतः ॥ ३१ ॥
यथा— दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
त्वरमाणश्च भीरुश्च लुब्धः कामी त्वमी दश ॥३२॥ इयं षट्पदगाथा ।
सजसा लघुः प्रथमकेऽथ ।
नसजगुरुका द्वितीयके ॥
भ्नौ च जलगिति तृतीयतरे ।
यदि तुर्यके सजसजागिद्योद्गता ॥ ३३ ॥
प्रथमद्वितीयकतुरीय— ।
चरणनियमोऽत्र पूर्ववत् ॥
स्यात्तृतीयचरणे रजभं ।
गुरुणेति सौरभकमुद्गतोद्गतम् ॥ ३४ ॥
नगणद्वयं सयुगलं च ।
यदि पदि तृतीयके तथा ॥
विषममपि ललितमित्यभवत् ।
मृदुपादलालिततयोद्गतादिके ॥ ३५ ॥
अथ ( +तत् ? )तृतीयचरणे तु ।
नभजलघुगं प्रवर्तते ॥
जगति कीर्तिरनुवर्तिगतिः ।
कविचारुकीर्तिमुनिना प्रकीर्तिता ॥ ३६ ॥

न्सौ ज्भौ गौ प्रथमे; द्वितीयके सनजा गौं ।
द्विन्सं तदनु तृतीयके, चतुर्थे ॥
त्रिगुणितनगणजयाः ।
प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ ३७ ॥
यस्यैतस्य तृतीयपादके द्विन्सं द्विः ।
नितरां तदिह विविद्धि वर्धमानम् ॥
प्रचुपितनियमसमानमितरदपि सकलं ।
समुदितमृदुपदपदवीकमितीदम् ॥ ३८ ॥
यद्येवं तजरास्तृतीयके पदि तस्य ।
प्रथमे यतिरपि चार्पमं पुरस्तात् ॥
स्याच्छुद्धविराडिदं यदि ।
प्रचुपितनियमनियमितापरलक्ष्मा ॥ ३९ ॥
जातिविजाती गाथा तथोद्गता सौरभकसुललिते कीर्तिः ।
भवतीत्युपस्थितप्रचुपितकमतो वर्धमानमपि शुद्धविराट् ॥ ४० ॥
इति जयकीर्तिकृतौ छन्दोऽनुशासने विषमवृत्ताधिकारश्चतुर्थः ॥

## पञ्चमोऽधिकारः ।

द्विगुरुस्तथान्तगुरुरादिगुरुश्च चतुर्लघुश्च मध्यगुरुः ।
इति पञ्चार्यादिगणाः प्रस्तारेऽत्र तु गुरोरधो लघुकौ द्वौ ॥ १ ॥
सप्त चतुर्मात्रगणा गुरुणार्यार्द्धद्वये न चायुजि जः ।
जः षष्ठो न्लगणो वा लघुरपरे त्रिगणविषमांह्रिः ॥ २ ॥
पादौ प्रथमतृतीयौ द्वादशमात्रौ द्वितीय आर्यायाः ।
अष्टादशमात्रोऽसौ चतुर्थकः पञ्चदशमात्रः ॥ ३ ॥
आर्यौजपादनिधने यस्यां पथ्योभयत्र, पूर्वार्धे ।
यस्यां तु पूर्वपथ्या परार्धयस्यां च परपथ्या ॥ ४ ॥
विपुला स्यादार्याविषमपादयुगनिधनयत्यतिक्रमणात् ।
न्लगणं प्रत्यार्यादिविरामनियामं प्रवक्ष्यामः ॥ ५ ॥
न्ले पञ्चमे चतुर्थगणान्ते पदमिह हि वसति तदनु तथा ।

षष्ठे षष्ठगणादौ सप्तमके न्ले च षष्ठान्ते ॥ ६ ॥
गुरुमध्यगौ भवन्तौ गणौ जकारौ द्वितीयकचतुर्थौ ।
स्यातां तथा यदार्यादलद्वये सर्वचपला स्यात् ॥ ७ ॥
जगणौ द्वितीयतुर्यौ तथोदितावुभयपार्श्वगुरुयुक्तौ ।
पूर्वार्धे यस्याः सा मुखचपला शेषमार्यावत् ॥ ८ ॥
पूर्वार्धमिहार्यावत् पश्चार्धे पूर्वपरगुरुश्लिष्टौ ।
दृष्टौ द्वितीयतुर्यौ यदा तु जौ जघनचपला स्यात् ॥ ९ ॥
गुर्वन्तसप्तगणभागार्यापूर्वार्धलक्ष्ण सकलम् ।
यद्युभयार्धे यस्याः प्रवर्तते सा तु गीतिरिति गीता ॥ १० ॥
योऽयमिह षष्ठलघुभागार्यापरदलगतो नियमः ।
सकलः शकलयुगे चेद्यस्यास्तामाहुरुपगीतिम् ॥ ११ ॥
षष्ठलघुभाग्यदार्यापरदलनियमोऽत्र पूर्वार्धे ।
गुरुपरसप्तगणार्याप्राग्वन्नियमः परे यदोद्गीतिः ॥ १२ ॥
सर्वचतुर्मात्रगणो गुर्वन्ताष्टमगणोभयार्धः स्कन्धः ।
पूर्वत्रिगणौजाद्धिः सर्वत्रायुजि न जो; न्लजौ वा षष्ठः ॥ १३ ॥
सर्वलघुः स्कन्धोऽसौ गुर्वन्ताष्टमगणत्वतो नास्ति भृशम् ।
सर्वगुरुर्नास्ति तथा पूर्वमतान्नियतषष्ठजन्लगणत्वात् ॥ १४ ॥
त्रिंशद्वाश्चत्वारो लास्ते स्कन्धस्य वर्णका न्यूनाश्चेत् ।
वर्धन्ते चेद्वाभ्यां लाः षष्टिस्तत्कलाश्चतुःषष्टिः स्युः ॥ १५ ॥
स्फुरति स तु नियतगुरुपरपुरहतलघुदशकघटितसयशकलयुगः ।
सुरुचिरयतियुतमृदुपदविरचितगतिचरणविसृतिरिति बुधगदितः १६
आर्यागीतेरर्धेनार्यार्धं किंचनपि कथमपि सह चेत् ।
आर्याविदैः प्रणीतेत्यार्यैः संकीर्णजातिरियम् ॥ १७ ॥
स्कन्धस्य षष्ठधामन्यभितश्चैको लू यदोपस्कन्धः ।
उत्स्कन्धः पौरस्त्ये पाश्चात्यार्धे तदावस्कन्धः ॥ १८ ॥
गीतिस्तु रिपुच्छन्दः सप्तमरगणे तृतीयके ललिता ।
तदुभयरि भद्रिका स्यात्षष्ठं तु विमुच्य रवहुला विचित्रा ॥ १९ ॥
सुगतचतुर्गतिमात्रगणांहि प्रगणितमलान्तगणनिधनदलम् ।

नगणविकल्पितजगणतुंपदं जगणेन नौजधाम ध्रुवकम् ॥ २० ॥
तदीयविषमास्पदेऽपि यदा जगणोऽथ षष्ठोऽन्यथा तथा वा ।
तदा तथा स्कन्धकेऽपिदू+रिपुच्छन्दआदि विरूढसंज्ञाम् ॥ २१ ॥
गाथार्योदिदलादार्याशयुगे पूर्ववत्परार्धे तद्गणयुगवृध्या ।
तद्न्यवसमुपाधिपरा मालागाथा ततोऽप्यधिका ॥२२ ॥
आर्या पथ्यात्रितयं विपुला चपलात्रयं तथा गीतिः ।
उपगीतिश्चोद्गीतिश्चार्यागीतिरपि सैव च स्कन्धः ॥ २३ ॥
संकीर्णचतुष्कमुपस्कन्धश्चोत्स्कन्ध इत्यवस्कन्धः ।
गतिभेदरिपुच्छन्दो ध्रुवकमतस्तत्र सप्तविधगाथाश्च ॥ २४ ॥
प्रतिचरणकयतियुगचलधृतिरथ ।
गतिहतगतिलघुरतिमृदुगतिरिति ॥
सममपि सममिति न तु भुवि समघटि ।
समजनि पृथगिह लसमकसमितिषु ॥ २५ ॥
मात्रासमकेषु वदन्ति चतु—
र्मात्रोक्तचतुर्गणमार्यजनाः ।
मात्रासमकं गपरांशान्तं
मात्रा नवमीह तु लघ्वी स्यात् ॥ २६ ॥
भगणो भवति तृतीयगणोत्रा-
मुक्तः पूर्ववदेव सुनेत्रा ।
यदि पूर्गण(?) मुनिनेत्युपचित्रा ।
सोक्तांह्राविति षोडशमात्रा ॥ २७ ॥
चतसृभ्य एव मात्राभ्यो जो ।
न्लौ वान्यदिह तथा विश्लोकः ॥
काव्यं हि तेन पुण्यश्लोकाः ।
प्रज्ञामहोदयाः कथयन्ति ॥ २८ ॥
मात्राभ्योऽष्टाभ्य एव यस्या ।
जो न्लौ वा पूर्ववदिह शेषम् ॥
सविशेषाद्वानवासिकेति ।
प्रवदन्ति विशेषवादिनस्ताम् ॥ २९ ॥

मात्राभ्य इमौ चतसृभ्यः सौ ।
यत्राभिहितावितरत्प्राग्वत् ॥
मात्रासमजातिषु सा कथिता ।
चित्रांशविरामविचित्रतया ॥ ३० ॥
कैश्चिन्मात्रासमकादीनां ।
पादैर्मिश्रैर्द्वित्रिचतुर्णाम् ॥
पादाकुलकं कविपादैस्तद् ।
व्यापादितं चतुष्पद्येवम् ॥ ३१ ॥
अप्रतिपादितपादैर्गन्तैः ।
प्रतिपादितपादैरपि सार्धम् ॥
प्रोक्तं पिङ्गलपादाकुलकं ।
तिलकं सुचतुष्षष्टिकलानाम् ॥ ३२ ॥
यस्याः पूर्वार्धेऽष्टौ दीर्घा द्विः स्युः स्यात् सानङ्गक्रीडा ।
तदपरशकलक इह जलनिधिहतवसुदितवसुपरिमितसुलघव इति ॥३३॥
गुरुपरनिधियुतकृतिमितलघुसुरुचिरदलयुगयुगतिरुचिरा ।
गुरुतरकविजनविरचितकृतिषु च वरपदगतिरियमवगता ॥ ३४ ॥
मात्रासमकाचलधृत्युपचित्रावानवासिकाविश्लोकाः ।
चित्रापादाकुलकानङ्गक्रीडाह्वयातिरुचिरा गदिताः ॥ ३५ ॥
अचलधृतिर्गीत्यार्यानङ्गक्रीडा शिखा भवेन्नाम्ना ।
अतिरुचिरा तत्र तु चूलिका मता पिङ्ग (+ल ) स्य मते ॥ ३६ ॥
अचलधृतिः समवृत्तं स्यादतिरुचिरार्धसममनङ्गक्रीडा ।
विषममिह तत्किमित्यभ्यधायि कविभिः कलासमके ॥ ३७ ॥
॥ इति जयकीर्तिकृतौ छन्दोऽनुशासने आर्याजातिमात्रासमक-
जात्यधिकारः पञ्चमः ॥

## षष्ठोऽधिकारः ।

वैतालीयादीनां षण्मात्रगणोऽष्टधाष्टलः षोडशधा ।
त्रिचतुर्गुरुतः प्रस्तारोऽत्रापि गुरोरधो लघू द्वौ द्वौ स्तः ॥ १ ॥
विषमे पदि षट् समेऽष्ट वै ।
वैतालीयकला रलगपराः ।
असमात्र लघुस्थिति र्न चेत् ।
लघवः षण्न निरन्तराः समे ॥ २ ॥
मात्रानियमोऽत्र पूर्ववत्स्यात् ।
औपच्छन्दसिकं तथा रयान्तम् ।
मात्रागणलक्षणद्वयेन ।
व्यापाद्यन्त इमे विचित्रपादाः ॥ ३ ॥
सूत्रविदोक्तं प्रतिपादं ।
यत्र परौ भगणेन गकारौ ।
सात्र मतापातलिका स्यु-
र्मात्रा वैतालीयवदस्याः ॥ ४ ॥
वैतालीयसमांह्रिलक्षणं ।
प्रतिपादं खलु यत्र वर्तते ।
तत्समवैतालीयनामकं ।
संदृश्यं छन्दोऽनुशासने ॥ ५ ॥
विषमांह्रिगतं यदत्र तद् ।
वैतालीयस्य लक्षणम् ।
परितो विषमाभिधानभृद् ।
वैतालीयं तदुच्यते ॥ ६ ॥
औपच्छन्दसिकस्य लक्षणं यत् ।
समपादोदितमत्र वर्तते चेत् ।
प्रतिपादं तन्नाम तत्समौप-
च्छन्दसिकं छन्दोविदैः प्रणीतम् ॥ ७ ॥

ओजांह्रिगतं तथा यदौप-
च्छन्दसिकाख्यस्य लक्षणं चेत् ।
अभितो विषमाभिधानकौप-
च्छन्दसिक छन्दसीह दृष्टम् ॥ ८ ॥
आपातलिकाजातिसमांह्रि-
प्रणियतलक्षणमष्टकलाद्यम् ।
यत्र यदा भगुरुद्वितयान्तं ।
प्रत्यंह्रि समापातलिका सा ॥ ९ ॥
आपातलिकाविषमांह्रि-
प्रणिहितलक्ष्मण्यभितोऽस्मिन् ।
षण्मात्राद्यादि[+ ग ]युग्मे ।
सति विषमापातलिका स्यात् ॥ १० ॥
समयोर्यदि पादयोर्गुरौ ।
तुर्यपञ्चमकलासमागमे ॥
वैतालीयोक्तयोर्यदा ।
प्राच्यवृत्तिरिति नाम वर्तते ॥ ११ ॥
उदीच्यवृत्तिर्भवेद्यदा ।
वैतालीयगतौजपादयोः ।
गुरौ सतीह प्रयुक्तयो—
द्वैतीयीकतृतीयमात्रयोः ॥ १२ ॥
उदीच्यवृत्त्योजलक्षणं ।
प्राच्यवृत्तिसमपादलक्षणम् ।
यथास्वमत्रेति चेत्स्मृत ।
वृत्तजातिनिपुणैः प्रवर्तकम् ॥ १३ ॥
यत्प्रवर्तकसमांह्रिलक्षणं ।
लक्ष्यतेंह्रिषु चतुर्षु केवलम् ।
ललितजातिषु निशातबुद्धय—
स्तामुशन्ति बहुधापरान्तिकम् ॥ १४ ॥

प्रवर्तकौजांह्रिलक्ष्णं ।
प्रवर्तते चेन्निरन्तरम् ।
प्रवर्तकैश्छन्दसामसौ ।
प्रवर्तिता चारुहासिनी ॥ १५ ॥
यदि चौपच्छन्दसाख्यजातौ ।
प्राच्यवृत्तिनियमो भवेद्यथास्वम् ।
विदितौपच्छन्दसाभिधान—
प्राच्यवृत्तिरियमुच्यते विधिज्ञैः ॥ १६ ॥
उदीच्यवृत्तीयलक्ष्णं चे—
दौपच्छन्दसिके यथास्वमित्थम् ।
तदोच्यतेऽसौ कलाप्रवीणे—
रौपच्छन्दसिकाद्युदीच्यवृत्तिः ॥ १७ ॥
प्रवर्तकीयं यथास्वमौप—
च्छन्दसेऽत्र यद्भाणि लक्ष्णं तत् ।
प्रवर्तयत्यंशमेतदौप—
च्छन्दसप्रजनितं प्रवर्तकाख्यम् ॥ १८ ॥
सुन्दरं सयतिलक्ष्णं यदौप—
च्छन्दसप्रकटितापरान्तिकोक्तम् ।
छन्दसीह जयकीर्तिनाम्नि चौप—
च्छन्दसप्रजनितापरान्तिका स्यात् ॥ १९ ॥
उपागतं चारुहासिनीभा—
गुपेत्युपच्छन्दसीह तच्चेत् ।
विपच्यते चारुलक्ष्णं तत् ।
प्रपञ्चतश्चारुहासिनीयम् ॥ २० ॥
आपातलिकाह्वयजातौ ।
प्राच्यवृत्तिगदितिर्यदि यस्याम् ।

सापि तदापातलिकाख्य—
प्राच्यवृत्तिरभवद्गवृत्त्या ॥ २१ ॥
उदीच्यवृत्तेर्नियमोऽसौ ।
यदि तु भवत्यापातलिकायाम् ।
उदीच्यवृत्तिस्त्विति नाम्ना ।
गदितापातलिकादिरभिज्ञैः ॥ २२ ॥
उदीरितापातलिकायां ।
यत्प्रवर्तकमतं परिदृष्टम् ॥
यदा तदापातलिकादिः ।
स्यात्प्रवर्तकमिहार्धसमाभम् ॥ २३ ॥
आपरान्तिकमिदं खलु लक्ष्म ।
प्रापितं यदि तदा तलिकायाम् ॥
सापरा तदभिधा तलिकादिः ।
श्रीपुराणकविपुंगवगीता ॥ २४ ॥
प्रचोदितापातलिकायां ।
स चेद्विधिश्चार्वभिधायाः ।
सुविन्मतापातलिकादिः ।
सुचारुहासिन्यपि चेत् ॥ २५ ॥
अयुजोर्लघवोऽष्ट दश युजो—
र्लौ जो वा गुरुणा तदन्तयोः ।
र्लगणे तु तदादिलघुयति—
र्न विषमलघुतोऽत्रेति मागधी ॥ २६ ॥
तोयधिमात्रगणत्रितयाद्—
गो यदि नात्र जकारगणः ।
स्थायितृतीयपदाल्लयुगे सति ।
सोऽयमभाणि गुणोगुणिभिः ॥ २७ ॥
षट्कलतश्चतुष्कलगणाः पञ्चैव गुरूत्तरास्तथा ।

जो न्लगणोऽथवा द्वितीये पष्ठे च न चेतरत्र जः ॥
न्ले सति तत्र कररसस्थाने प्रथमलघौ तु यतिरसौ ।
स्याद् द्विपदीति पट्कलगणे ल्न समोऽत्र परेण युज्यते ॥ २८ ॥

प्राक्तनलक्षणद्विपदिकानियमः सकलः स वर्ततेऽस्मिन् ।
व्यक्तमतोऽधिके सति गुरौ प्रतिपादमितीदमञ्जनालम् ॥
पष्ठगणान्तलघुविहीना चेत्प्रथमद्विपदिकासौ ।
निष्ठितशेपलक्षणयुता भवतीति हि कामलेखा ॥ २९ ॥

ऊहितोक्तिततो गलांशसप्तकं निरन्तरं ।
गो हि नैधने नकारसप्तकं यदाथवा ॥
व्याहितं तदुभयमिश्रसप्तकं तदा तथो—
त्साहमाहुरुत्सवं च गोग्रहादिके बुधाः ॥ ३० ॥
महोत्सवो जकारतः सगोत्सवांशपट्कये ।
*     *     *     *     *
जकारतो ग्लयुग्मकं नकारगणविकल्पितं ।
स्वकारि गुरुपरं यदा प्रकाश्यते तदा रमा ॥ ३१ ॥

उत्सवांह्रिपूर्वकं यदा रमांह्रिकोत्तरं रमाह्रियुगलकोत्तरम् ।
प्रोत्समान्तरिततदंह्रिकोत्सवांह्रिनैधनं रमांह्रिरिति च नैधनम् ॥
यत्सुमोदयञ्जनं रमैकपाददलपरं तथोत्सवादि वा परम् ।
त(+त्स)मीरितं लयानुगाभि यमकवत्तरं विचित्रगति लयोत्तरम् ॥३२॥

नगणयुगलतोऽथ रैः सप्तभिर्दण्डकश्चण्डवृष्टिप्रपातस्तथैकोत्तरम् ।
प्रतिचरणवृद्धयोऽर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥
प्रचित इति नयुग्मतो यैस्तथान्यैरभिश्रीक्तैस्तत्प्रमाणैर्यदोत्पद्यते ।
शरगिरिगतिलोकलव्वादिकाश्चण्डवाताव्दसिंहाह्वयास्तेऽन्विताः-
शोत्तराः ॥ ३३ ॥

चण्डवृष्ट्यादिकादौ लघूक्तौ नियामोऽत्र यो वर्जयित्वेति तं पण्डितैः
अन्यरेफादिभिर्दण्डकांशैस्तथा केवलैर्ये कृताः ।
दण्डका वृत्तशब्दादिका वृत्तवत्ते हि पादोक्तलक्ष्मेतरा दण्डका
ये तु ते गद्यपूर्वाश्च मालादिकास्तेऽथवानेकधा ॥

यस्तयोत्सवोक्तगणमयो गुरूत्तरः स चोत्सवाभिधानदण्डको
महार्हदादिदेवतास्तवे स्तुतः ।
जगणेतराङ्घ्रिमात्रागणोऽत्र भृगमथुलि धाम्नि भवति जगणोऽथवा
न्लगण एष निधने गुरुश्च तु हि चित्रदण्डकः ॥ ३४ ॥
वैतालीयमतः समवैतालीयं च विषमवैतालीयम् ।
औपच्छन्दसिकापातलिके च तथा त्रिधा त्रिधा नवधेति ॥ ३५ ।
तत्तत्त्रिपञ्चकं प्राच्यवृत्तिसंज्ञाप्युदीच्यवृत्तिश्च ।
सार्धं प्रवर्त्तकेनापरान्तिका चारुहासिनीति जिनमिता ॥ ३६ ॥
मागधिका गुणजातिर्द्विपदीत्रयमुत्सवद्वितयमपि च रमा ।
पञ्चलयोत्तरविधयोऽपि चण्डवृष्ट्यादिदण्डका गणधोक्ताः ॥ ३७ ॥
इति जयकीर्तिकृतौ छन्दोऽनुशासने मिश्राधिकारः षष्ठः ॥

## सप्तमोऽधिकारः ।

वक्ष्येऽक्षरत्रिपद्येलाक्षरिकाषट्पदीचतुष्पदिकाः ।
छन्दोऽवतंससञ्ज्ञा मदनवतीर्गीतिकादिमपि कर्णाटे ॥ १ ॥
रलधा रतिमदनशरा द्वित्रिचतुर्गादयोऽङ्घ्रिवसुनृपसंख्याः ।
प्रस्तारे पूर्वगुरोरधो लघू द्वौ परस्य चैकैकलघुः ॥ २ ॥
द्वित्रिचतुर्वर्णा गाधास्त्रिचतुःपञ्चवर्णका लादिगणाः ।
क्रमशो रलधेषु भवन्त्येकैकलघुर्न वर्ततेऽत्र गणादौ ॥ ३ ॥
अङ्गजगणयुगाद् बाणगणे ।
सङ्गते प्रतिपादमल्पाक्षरम् ॥
शृङ्गारपिण्डादिकाव्येषु तत् ।
सङ्गीतं कर्णाटके प्रसिद्धम् ॥ ४ ॥
यदि तु रतिगणः पादादौ पादमध्ये ।
मदनगणयुगं पादान्ते बाणगणम् ॥
तदिदनन्तराक्षरसञ्ज्ञा ( I. ड्रैर् ) गीतं ।
विदितमार्हते कर्णाटेश्वरकथादौ ॥ ५ ॥
प्रथमे रतिरेव मन्मथः स्याद्द्वितीये तृतीयेऽ- ।
प्यथ चतुर्थे बाणगणस्तु पञ्चमस्थान एव ॥

ग्रथितं लक्षणमिति यस्य तन्मध्यमाक्षराख्यं ।
प्रथितं कर्णाटमालतीमाधवप्रभृतिकाव्ये ॥ ६ ॥
रतिपतिगणयुग्माद्रतितः स्मरयुग्मं रतिरपि ( add च पुनः ) ।
प्रतिपादं वर्तते यस्मिंस्तत्समानाक्षरं नाम ॥
श्रुतिकान्तमक्षरदक्षैरादृतमसगाख्यकविना ।
प्रतिपादितं ननु कर्णाटकुमारसंभवकाव्ये ॥ ७ ॥
आदौ रतिगणो मध्येऽत्र स्मरगणपञ्चकमन्ते तु बाणगणः ।
पादेष्विह रतिर्वा द्वितीये तुर्ये च स्थाने तन्महाक्षराख्यम् ॥
पादादिप्रभृतीति केवलं स्मरगणषट्कयं बाणान्तं केचिदाहुः ।
पादे पादेऽत्र प्रतिगणमपि यतिर्लक्ष्यते सर्वेषामक्षराणाम् ॥ ८ ॥
करकराब्धिचयंश— ।
चरणा दिग्नसरतिः ॥
स्मरमयी लादिगिरिहरांशा चान्त— ॥
विरमणाच्चित्रा त्रिपदिका ॥ ९ ॥
सर्वलक्षणमत्र ।
पूर्ववद्धरधाम्नि ॥
गुर्वादिबाणगणभाग् विचित्रा स्यात् ॥
पूर्वं कर्णाटच्छन्दोमते ॥ १० ॥
मात्राभिर्द्वापष्ट्या ।
चित्रा स्यादित्येवम् ॥
मात्रा वर्धन्ते क्वचिदस्या न्यूनास्ताः ॥
सूत्रं पूर्वोक्तं किममूभिः ॥ ११ ॥
ऋतुहतगिरिपरि— ।
मितलघुरियमथ ॥
यतियुतिरखिलगुरुरिह न भवति ॥
यतिपतिगदितमत इति ॥ १२ ॥
सर्वलघुर्न चेत् ।
सर्वथा त्रिपदिका ॥

सर्वगुरुस्तु न भवेद् गिरीशयो—।
गुर्वादिलगणप्रतिषेधात् ॥ १३ ॥
त्रिपदी वृतीयांह्रा—'।
वपसुश्चत्येलेति ॥
सुपठिता गेयविद्जनैः[1] ॥ १४ ॥
मदनाद्याः शरगणान्ताः ।
यदि चरणाश्चत्वारः ॥
गदिताश्चेच्चतुष्पदिका ।
विदितासौ चूडामणौ ॥ १५ ॥
कन्दर्पगणतो रतिगणचतुष्कं चेत् ।
छन्दसि जयकीर्तेरादिवराहाख्या ॥
छन्दोऽवतंसनामेति चतुष्पदिका ।
संदृष्टासौ कुमारसंभवादौ ॥ १६ ॥
स्मरगणः परितोऽत्र । शरगणः पुरषष्ठ— ।
चरणान्तयोस्तदन्ते विरामः ॥
करकरपुरगणाः । द्विरिहत्याश्चरणाश्चेत् ।
स्फुरति षट्चरणवत् षट्पदिका[2] ॥ १७ ॥
स्मररतिपूर्वं स्मररतिमध्यं स्मरयुगगुरुनिधनम् ।
चरणचतुष्कं स्थिरतरचतुरुत्तरशतमात्रमिदम् ॥
करिवसुमात्राविरमणयुक् चेत् स्फुरति तदाक्षरिका ।
गुरुपरजगणेतरगतिमात्राधरगणभागथवा ॥ १८ ॥

---

१ पञ्च कामा रतिश्चैका कामोऽन्ते चरणत्रये ।
प्रत्येक तासु चेदेताश्छन्दस्वत्योऽखिला मताः ॥ १२५ ॥
गणादेर्न्यूनताधिक्यादेलामासा इमा मताः ॥ १२६ ॥
—संगीतरत्नाकर ( Adyar Ed. 1944 ) IV.

२ षष्ठस्तृतीयस्त्रिगण पृथग् द्विद्विगणाः परे ।
चत्वारश्चरणा बाणप्रान्तौ षष्ठतृतीयकौ ॥ २७२ ॥
शेषास्तु मान्मथगणा यस्या सा षट्पदी मता ।
कर्णाटभाषया तालवर्जिता नादमुक्तिका ॥ २७३ ॥
—संगीतरत्नाकर ( Adyar Ed. 1944 ) IV

प्रथमक इह गुरुपरकृतिपरिमितलघुदितरे— ।
प्यथ पादा रतिगणपरगतिमदनगणाः स्युः ॥
ग्रथितपदावलयस्तैश्चेदिति मदनवती ।
प्रथितयतिः प्रतिचरणं द्वाविंशतिमात्रा ॥ १९ ॥
रगणो द्वितीये षष्ठे च ।
लगणो धगणो वान्यत्र पञ्चस्वर्धयोश्च ॥
त्रिगणोऽयुक् समपादोऽब्धिगणो ।
निगदिता गीतिकालंकारे प्रभुसेनीयैः ॥ २० ॥
आदिर्गुरुपूर्वश्चेत्पादो गुरुपूर्वकास्तथान्ये जातौ ।
पादो लघुपूर्वश्चेद्वाद्रिः शेषास्तथैव भाषाविषये ॥ २१ ॥
किमेतावन्ति पद्यानि चेहानुक्तान्यनेकधा ।
सन्ति षट्प्रत्यये तानि दृश्यन्ते सूचितानि च ॥ २२ ॥
इति जयकीर्तिकृतौ छन्दोऽनुशासने कर्णाटविषयभाषाजात्यधिकारः सप्तमः ॥

## अष्टमोऽधिकारः ।

*गणानां प्रत्ययानां च मुख्यः प्रस्तार एव सः ।*
तस्मात्प्रस्तारसूत्रं तदूध्येकं सर्वत्र दृश्यते ॥ १ ॥
गुरोरधस्ताल्लघुमादितः क्षिपेत्परं लिखेदूर्ध्वसमं पुनस्तथा ।
पाश्चात्यखण्डं गुरुणा प्रपूरयेद्यावत्पदं सर्वलघुत्वमाप्यते ॥ २ ॥
विन्यस्य सर्वगुर्वेकद्विचतुष्कान्समार्धसमविषमांह्रीन् ।
प्रस्तारयेत्पृथक्पृथगिति क्रमात् वृत्तविधिरयं प्रस्तारः ॥ ३ ॥
एकैकेनान्तरिता प्रस्तारप्रथमपङ्क्तिरिह गुरुलघुना ।
तत्तद्द्विगुणितगलतः क्रमाद्द्वितीयादिपङ्क्तयोऽन्तरिताः स्युः ॥४॥
अर्धसमप्रस्तारे संदृश्यन्ते समार्धसमवृत्तानि ।
विषमप्रस्तारेऽत्र तु समार्धसमविषमवृत्तरूपाण्यखिलम् ॥ ५ ॥
जातीनामपि चतुरः पादान्विन्यस्य संभवत्सर्वगुरून् ।
प्रस्तारयेदिति प्राग्गणसंभवमपि लघुप्रयोगं ज्ञात्वा ॥ ६ ॥
पृच्छकवृत्तमिताङ्कं दलयेल्लघु समदले लिखेद्गुरु विषमे ।
सैकत्वाच्छन्दोसिति जनयेदिति नष्टवृत्तरूपकसङ्कात् ॥ ७ ॥

रूपितवृत्तप्रतिगलमेकादिद्विगुणिताः स्युरुपरि तदङ्कान् ।
लगतान्सैकान्युक्त्वा तावतिथं वृत्तमिति वदेत्प्रस्तारे ॥ ८ ॥
छन्दोवर्णानेकाधिकरूपानुत्क्रमाभिधाया (+धस्ता)त् ।
तत्तदुपर्युपरि तथा क्षिपेदिति पुनः पुनर्जह्न्नेकैकम् ॥ ९ ॥
आद्यन्त( r. न्ते ) सर्वलगे एकादिलघूनि मध्यवृत्तान्येषु ।
पिण्डीकृतेषु संख्या सैकोद्दिष्टाङ्कपिण्डिता वा संख्या ॥ १० ॥
छन्दोऽक्षरे समदले शून्यं न्यस्य विषमे तथा रूपम् ।
रूपे तद्द्विगुणं खे वर्गः समवृत्तसंख्या स्यात् ॥ ११ ॥
ज्ञातसमवृत्तसंख्या तत्तद्गुणतोऽर्धसमकसंख्या मूलात् ।
तत्तद्गुणात्समूलार्धसममितेर्विपमवृत्तमितिरपमूला ॥ १२ ॥
पञ्चविधवृत्तसंख्या स्थाने स्वाक्षरहृते द्वितीयादिदले ।
दलिततृतीयचतुर्थे सार्धान्ते वृत्तवर्णगुरुलघुमात्रा ॥ १३ ॥
जात्यंह्रिचतुष्के प्रतिगणं क्षिपेत्तत्र संभवद्गणसंख्याम् ।
गुण (+ये) दन्योन्यं तत्संख्या स्यात्सर्वजातिसंख्येति मता ॥ १४ ॥
आर्याथ सप्तपञ्चाशन्मात्रा स्कन्धकश्चतुःषष्टिकलः ।
तद्वन्मात्रासमकं सद्वादशशतकला द्विपदिकेत्यादेः ॥ १५ ॥
जातेर्मात्रापिण्डे स्वाक्षररहिते कृते स्थिता गुरवः स्युः ।
गुरुरहितेऽक्षरसंख्या लघुरहितेऽर्धीकृते तु गुरुसंख्या स्यात् ॥१६॥
छन्दःसंख्या हता द्वाभ्यामेकरूपविवर्जिता ।
छिन्नवृत्ताद्गुलव्याप्तिरध्वयोगो भवेदिति ॥ १७ ॥
प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलघुक्रिया ।
संख्यानमध्वयोगश्चेत्युक्तं प्रत्ययषट्कयम् ॥ १८ ॥
माण्डव्यपिङ्गलजनाश्रयसैतवाख्य-
श्रीपादपूज्यजयदेवबुधादिकानाम् ।
छन्दांसि वीक्ष्य विविधानपि सत्प्रयोगान्
छन्दोऽनुशासनमिदं जयकीर्तिनोक्तम् ॥ १९ ॥

इति जयकीर्तिकृतौ छन्दोऽनुशासने ( प्रस्तारादिप्रत्ययाधिकारः ) ॥
संवत् ११९२ आषाढशुदि १० शनौ लिखितम् ।

# अथ भट्टकेदारविरचितः वृत्तरत्नाकरः ।

## प्रथमोऽध्यायः ।

सुखसंतानसिध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शंकरं लोकशंकरम् ॥ १ ॥
वेदार्थशैवशास्त्रज्ञः पव्वेकोऽभूद् द्विजोत्तमः ।
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥ २ ॥
तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् ।
वृत्तरत्नाकरं नाम बालाना सुखसिद्धये ॥ ३ ॥
पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा ।
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥ ४ ॥
षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमिति विज्ञेयं षट्त्रिंशदधिकं शतम् ॥ ५ ॥
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ ६ ॥
सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥ ७ ॥
ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥ ८ ॥
सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।
वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः ॥ ९ ॥

---

2 a. वेदान्तशैव ० Rm; वेदार्थसर्व ० Ss ( v 1 ). 2 b. पव्येको Nr, पठ्येको Rm; पिव्वेको Sk, Su (c). 3 d. -सुखबुद्धय Bb, Pb, Rm, Sh, Sm, Su (b). 4 c. -वर्ण विभागेन Br. 5 c. प्रमाणमपि ० Ba, Br, Jn, Pa, Rm, Vs. Stz 5 is dropped by Ss. 8 a. -सर्वादिमध्यान्त Rm, Su (b). 8 d पथ्यार्या ० Rm. 9 c. वा पदान्ते ० Br, Su (b); वा पादान्तस्थ ० Bb, Sk, Su (c). 9 d. -मातृको ० Ba, Bb, Jn, Su (a, b).

पदादाविह वर्णस्य संयोगः क्रमसंज्ञकः ।
पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद् गुरोः* ॥ १० ॥
अब्धिभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः ।
ज्ञेयः पादश्चतुर्थांशो यतिर्विच्छेदसंज्ञिता ॥ ११ ॥
युक्समं विषमं चायुक् स्थानं सद्भिर्निगद्यते ।
सममर्धसमं वृत्तं विषमं च तथापरम् ॥ १२ ॥
अंह्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥ १३ ॥
प्रथमांह्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद् वृत्तं तदर्धसममुच्यते ॥ १४ ॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ १५ ॥
आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ।
पृथक्छन्दो भवेत्पादैर्यावत् षड्विंशतिं गतैः ॥ १६ ॥
तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः ।
शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥ १७ ॥
उक्तात्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ १८ ॥

---

* १०. १ तरुण सर्षपशाक नवौदन पिच्छिलानि च दधीनि ।
अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति ॥
[1 b पिच्छलानि Ba, Bb, Pa, Sk, Sm, Ss, Su (b). 1 d मृष्टम० Sd, Su (b, c).

---

10 a पादाद्याविह ० Ba, Bb, Br, Nr, Pa, Pb, Rm, Sd, Sk, Sm, Su (a), Ss, Vs. Jn notices पादादौ but rejects it, Br notices पदादौ and prefers it but does not adopt it. 10 b - क्रमसंज्ञित Rm. 10 c. परस्थितेन ० Rm. 11 b. ज्ञेया संज्ञाश्च ० Sm, Su (b); ज्ञेया. संख्यास्तु ० Rm. 11 d. - संज्ञका Sm (b), Su (b), Vs; - संज्ञिका Ba, Bb, Jn, Pa, Sk, Sm (a); - संज्ञित. Nr; - संज्ञक. Rm. 12 d. - तत. परम् Jn; - भिधा मतम् Rm. 13 a—14 a. अंघ्रयो ० प्रथमांघ्रि ० Ba, Nr, Pa, Pb, Rm, Sm, Vs. 16 d. - षड्विंशक ० Su (c). - गतम् Bb, Nr, Pa, Pb. Rm, Sm, Ss, Su (a), Vs. 18 b. - प्रतिष्ठा सुप्रतिष्ठिता Rm.

त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्वरी सातिपूर्वा स्यादष्टयत्यष्टी ततः स्मृते ॥ १९ ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चापि तथाभिकृतिरुत्कृतिः ॥ २० ॥
इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि सांप्रतम् ।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ॥ २१ ॥
॥ इति भट्टकेदारविरचिते वृत्तरत्नाकराख्ये छन्दसि संज्ञाविधानो नाम प्रथमोऽध्यायः ॥ १ ॥ [ प्र० श्लो० २१. ]

## द्वितीयोऽध्यायः ।

लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं च नलघु वा प्रथमेऽर्धे नियतमार्यायाः ॥ १ ॥
षष्ठे द्वितीयलात्परके न्ले मुखलाच्च स यदि पदनियमः ।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ २ ॥
त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम् ॥ ३ ॥
संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ ४ ॥
उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ।
चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ५ ॥
आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६ ॥
प्राक्प्रतिपादितमर्धे प्रथमे, प्रथमेतरे तु चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ ७ ॥

---

20 c. चैव ( for चापि ) Br, Rm 20 d. तथातिकृति० Br, Nr, Rm, Vs.

1 c. -यं नलघू वा Ba, Br, Nr, Pa, Pb, Sd, Wa, Wb, Wc, Wg, -यं नलघु वा Bb, -यं नगणो वा Vs. 2 b -सयतिपद० Ba, Bb, Br, Jn, Nr, Pa, Pb, Rm, Sd, Vs, Wa. 3 d. प्रकीर्तित नागराजेन Br, Nr, Pb, Wa, Wc. 4 a. उल्लंघ्य० Br, Pa, Pb, Rm, Wa, Wc. 5 a. दलयोर्द्वयोर्ज० Ba. 7 b. च ( for तु ) Br, Pa, Wa. 7 c. -चोक्ता Pa.

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥ ८ ॥
आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ ९ ॥
आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः ।
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसयुक्ता ॥ १० ॥
आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।
इतरत्तद्वन्निखिलं यदीयमुदितैवमार्यागीतिः ॥ ११ ॥
षड् विषमेऽष्टौ समे कला— ।
स्ताश्च समे स्युर्नो निरन्तराः ॥
न समात्र पराश्रिता कला ।
वैतालीयेऽन्ते रलौ गुरुः ॥ १२ ॥
पर्यन्ते यौं तथैव शेष— ।
मौपच्छन्दसिकं सुधीभिरुक्तम् ॥ १३ ॥
आपातलिका कथितेयं ।
भाद्गुरुकावथ पूर्ववदन्यत् ॥ १४ ॥
तृतीययुग् दक्षिणान्तिका ।
समस्तपादेषु द्वितीयलः ॥ १५ ॥
उदीच्यवृत्तिर्द्वितीयलः ।
सहितोऽग्न्येण भवेद्युग्मयोः ॥ १६ ॥

---

9 a -कैंऽशे Su. 9 b यद्गीतं लक्षण० Wg. 10 c. कथि ा ( for गदिता ) Br, Rm, Sk, Sm, Wa 11 d. भवति यदीयमुदितेयमा० Br, Wa, Wb, Wg, भवति यदीरमर्धमुदितार्या० Nr; दलं यदीयमुदितेयमा० Rm, Sd, Sm (b), दल यदीयमुदितैवमा० Sk, Ss, Vs, यदीयमर्धमुदितैवमा० Pa, Wc, यद्रीयमर्धमुदितेयमा० Pb, य.ी-मुदि ा ि.लेयमा० Ba, यदीयमुदितेयमा० Jn. Note that according to Jn, Sm and Su, this line contains only 17 Mātrās as against 20 acc to others. 12 a षड् विषमे सभेष्टौ कला Wa. 12 b. षट् च समे स्युर्नो० Rm, Wa, Wc, Wg. 12 c -परेण युज्यते Bb 13 ab -शेष चौप० Bb, Sm (a), Su (b); -शेषं त्वौप० Ss, शेषं ह्यौप० Ba, Br, Pa, Vs 16 b. सक्तोऽग्रेण० All Mss. except Su.

पूर्वेण युतोऽथ पञ्चमः ।
प्राच्यवृत्तिरुदितेति युग्मयोः ॥ १७ ॥
यदा समावोजयुग्मकौ ।
पूर्वयोर्भवति तत्प्रवृत्तकम् ॥ १८ ॥
अस्य युग्मरचितापरान्तिका ॥ १९ ॥
अयुग्भवा चारुहासिनी ॥ २० ॥
वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ २१ ॥
युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥ २२ ॥
ओजयोर्जेन वारिधेस्तदेव विपरीतादि ॥ २३ ॥
चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥ २४ ॥
यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥ २५ ॥
सैतवस्याखिलेष्वपि ॥ २६ ॥
भेनाब्धितो भाद्विपुला ॥ २७ ॥
इत्थमन्या रश्चतुर्थात् ॥ २८ ॥
नोऽम्बुधेश्चेन्नविपुला ॥ २९ ॥
तोऽब्धेस्तपूर्वान्या भवेत् * ॥ ३० ॥
द्विकगुणितवसुलघुरचलधृतिरिति ॥ ३१ ॥
मात्रासमकं नवमो ल्ग् गन्तम् ॥ ३२ ॥
जो न्लावथाम्बुधेर्विश्लोकः ॥ ३३ ॥
तद्युगलाद्वानवासिका स्यात् ॥ ३४ ॥
वाणाष्टनवसु यदि लश्चित्रा ॥ ३५ ॥

---

* ३०. १ अम्भोनिधेर्मस्तत्पूर्वा Ba, Jn.

---

17 b. -रुदितैव° Rm, Wr. 20. अयुग्मयुक्° Br, Wa 23 a. अयुजोर्जेन° Rm, Sk, Ss, Wr. 30. तोऽम्बुधेस्तपूर्वा भवेत् Wb. 29 and 30 dropped in Sd. 31 द्विगुणित ... रिति च ( इ Pa, Wc ) Br, Nr, Pa, Pb, Wa, Wc, द्विकगुणित .. रिह Rm. 32. - ल्गान्त्य' Rm, ल्गान्तम् Nr, Pa. 33. जो न्लावथ जलधेर्विश्लोक. Br (v. l.), Sn (b). 35. पञ्चाष्टनवसु° Vs.

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेश. ॥ ८ ॥
आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ ९ ॥
आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः ।
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥ १० ॥
आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।
इतरत्तद्वन्निखिलं यदीयमुदितैवमार्यागीतिः ॥ ११ ॥
षड् विषमेऽष्टौ समे कला— ।
स्ताश्च समे स्युर्नो निरन्तराः ॥
न समात्र पराश्रिता कला ।
वैतालीयेऽन्ते रलौ गुरुः ॥ १२ ॥
पर्यन्ते यौं तथैव शेष— ।
मौपच्छन्दसिकं सुधीभिरुक्तम् ॥ १३ ॥
आपातलिका कथितेयं ।
भाद्गुरुकावथ पूर्ववदन्यत् ॥ १४ ॥
तृतीययुग् दक्षिणान्तिका ।
समस्तपादेषु द्वितीयलः ॥ १५ ॥
उदीच्यवृत्तिर्द्वितीयलः ।
सहितोऽन्त्येण भवेद्युग्मयोः ॥ १६ ॥

---

9 a -केंऽशे Su. 9 b यद्गीतं लक्षणं० Wg. 10 c कथिता ( for गदिता ) Br, Rm, Sk, Sm, Wa. 11 d. भवति यदीयमुदितेयमा० Br, Wa, Wb, Wg, भवति यदीयमर्धमुदितार्या० Nr; दलं यदीयमुदितेयमा० Rm, Sd, Sm (b), दल यदीयमुदितैवमा० Sk, Ss, Vs, यदीयमर्धमुदितैवमा० Pa, Wc, यदीयमर्धमुदितेयमा० Pb, य.ीचमुदि I ि.लेयमा० Ba, यदीयमुदितेयमा० Jn. Note that according to Jn, Sm and Su, this line contains only 17 Mātrās as against 20 acc to others. 12 a षड् विषमे ऽष्टौ कला Wa 12 b. षट् च समे स्युर्नो० Rm, Wa, Wc, Wg. 12 c -परेण युज्यते Bb 13 ab -शेषं चौप० Bb, Sm (a), Su (b); -शेषं त्वौप० Ss, शेष ह्यौप० Ba, Br, Pa, Vs 16 b सहितोऽन्येण० All Mss. except Su.

पूर्वेण युतोऽथ पञ्चमः ।
प्राच्यवृत्तिरुदितेति युग्मयोः ॥ १७ ॥
यदा समावोजयुग्मकौ ।
पूर्वयोर्भवति तत्प्रवृत्तकम् ॥ १८ ॥
अस्य युग्मरचिनापरान्तिका ॥ १९ ॥
अयुग्मवा चारुहासिनी ॥ २० ॥
वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ २१ ॥
युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥ २२ ॥
ओजयोर्जेन वारिधेस्तदेव विपरीतादि ॥ २३ ॥
चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥ २४ ॥
यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥ २५ ॥
सैतवस्याखिलेष्वपि ॥ २६ ॥
भेनाब्धितो भाद्विपुला ॥ २७ ॥
इत्थमन्या रश्चतुर्थात् ॥ २८ ॥
नोऽम्बुधेश्चेन्नविपुला ॥ २९ ॥
तोऽब्धेस्तपूर्वान्या भवेत् * ॥ ३० ॥
द्विकगुणितवसुलघुरचलधृतिरिति ॥ ३१ ॥
मात्रासमक नवमो ल् गन्तम् ॥ ३२ ॥
जो न्लावथाम्बुधेर्विश्लोकः ॥ ३३ ॥
तद्युगलाद्वानवासिका स्यात् ॥ ३४ ॥
बाणाष्टनवसु यदि लश्चित्रा ॥ ३५ ॥

---

* ३०. १ अम्भोनिधेर्मस्ततपूर्वा Ba, Jn

---

17 b. -रुदितैव० Rm, Wr. 20. अयुग्मयुक्० Br, Ws 23 a. अयुजोर्जेन० Rm, Sk, Ss, Wr. 30 तोऽम्बुधेस्तपूर्वा भवेत् Wb. 29 and 30. dropped in Sd. 31 द्विगुणित . रिति च ( इ Pa, Wc ) Br, Nr, Pa, Pb, Wa, Wc, द्विकगुणित . . रिह Rm. 32. -ल्गान्त्य॰ Rm, ल्गान्तम् Nr, Pa. 33. जो न्लावथ जलधेर्विश्लोक Br (v l.), Sn (b). 35. पञ्चाष्टनवसु० Vs.

अष्टाभ्योऽथ गलावुपचित्रा ॥ ३६ ॥

यदतीतकृतविविधलक्ष्मयुतै—
मात्रासमादिपादैः कलितम् ॥
अनियतवृत्तपरिमाणसहितं
प्रथितं जगत्सु पादाकुलकम् ॥ ३७ ॥

वृत्तस्य लो विना वर्णैर्वर्णा गुरुभिस्तथा ।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ ३८ ॥

शिखिगुणितदशलघुरचित—
मपगतलघुयुगलमपरमिदमखिलम् ।
सगुरु शकलयुगलकमपि
सुपरिघटितललितपदनिचितिभवति शिखा ॥ ३९ ॥

विनिमयविहितशकलयुगललघु —
ललितपदविततिविरचितगणनिचया ।
श्रुतिसुखकृदियमपि जगति
जघनचपलगतिरिति सति भवति खजा ॥ ४० ॥

अष्टाववर्णा गा व्यभ्यस्ता
यस्याः सानङ्गक्रीडोक्ता ।
दलमपरमपि वसुगुणितजलनिधि-
लघुकविरचितपदविततिभवति ॥ ४१ ॥

त्रिगुणनवलघुरवसितिगुरुरिति
दलयुगकृततनुरतिरुचिरा ॥ ४२ ॥

॥ इति भट्टकेदारविरचिते वृत्तरत्नाकराख्ये छन्दसि मात्रावृत्ताधिकारो नाम द्वितीयोऽध्यायः ॥ २ ॥ [ ग्रं० श्लो० ३२, अ० ८ ]

---

36 अष्टाभ्यो न (गा Pa) ला उपचित्रा Ba, Br, Pa, Vc, Wa, Wc; -गायुग० Wb; -गाष्टाद्युग० Sa (b), -मात्रायुग० Ba, Ss, Vc; नवमे त्वमि गुगयुग्मचित्रा Ba, Jc, Vc; उपचित्रा नवमे परयुक्ते Ba, Br, Nr, Pa, Pb, Ss, Wa, Wc; अविद्युगाङ्कस्तुपचित्रा Bm, Wg. 36 is dropped in Sk. 37 c. -परिमाणयुक्तं Br, Nr, Pa, Pb, Wa. 38 a. ला (for लो) Ba, Br, Nr, Pa, Pb, Bm, Sd. 39 b. -पदविततिभवति शिखा Ba, Br, Nr, Pa, Pb, Bm, Wa, Wb, Wc, Wg. 40 a. विनिमयविनिहित . . युगलकलितपदविततिविरचितगु . . Br, Nr, Pb, Wa, Wb, Wc, Wg; विनिमयनिहित .. ततिविरचितगण० Bm (a); -गुणनिचया Bm; -युगलघुकलित ... विरचित० Pa. 40 b. -जगति नि जघन चप० Br, Nr, Pb, Bm, Wa, Wb, Wc, Wg.

## ॥ तृतीयोऽध्यायः ॥

ग् श्रीः ॥ १ ॥ गौ स्त्री ॥ २ ॥ मो नारी ॥ ३ ॥ रो मृगी* ॥४॥ म्गौ चेत्कन्या* ॥ ५ ॥ भ्गौ गिति पङ्क्तिः* ॥ ६ ॥ त्यौ स्तस्तनुमध्या ॥ ७ ॥ शशिवदना न्यौ ॥ ८ ॥ त्सौ चेद्वसुमती* ॥ ९ ॥ म्सौ गः स्यान्मदलेखा ॥ १० ॥ कुमारललितं ज्सौग् ॥ ११ ॥ सरगा हंसमाला* ॥ १२ ॥ मो मो गो गो विद्युन्माला ॥ १३ ॥ भौ गिति चित्रपदा गः ॥ १४ ॥ माणवकं भात्तलगाः ॥ १५ ॥ म्नौ गौ हंसरुतमेतत् ॥ १६ ॥ जौ समानिका गलौ च ॥ १७ ॥ प्रमाणिका जरौ लगौ ॥ १८ ॥

---

* ४. १ य केसा Rm.

* ५. १ ज्ग लासिनी Rm. ५. २ म्यौ सुमुखी Rm ५. ३ यगौ व्रीडा Rm. ५. ४ गौं समृद्धिः Rm. ५. ५ सुमतिः स्गौ Rm.

* ६. १ सती जगौ गः Rm. ६. २ मन्दा तलगैः Rm ६. ३ गौं गिति प्रीतिः Rm.

* ९. १ (A) कामलतिका भ्यौ Ba, Jn; (B) -ललिता भ्यौ Vs. ९. २ (A) मौ सावित्रमाहुः Rm, Wg, (B) विद्युल्लेखा( न्माला Wc ) मो मः Ba, Br, Nr, Pa, Pb, Vs, Wb ९. ३ भ्रौ यस्याः सा नदी Rm, Wg. ९. ४ (A) म्सौ प्रोक्त मुकुलम् Rm, Wg, स्यान्मः सो मुकुलम् Wc, (B) स्यान्मः सोऽनुकूलम् Su (b), (C) स्यान्म्सौ सोमकुलम् Ba, Jn. ९. ५ यग्यौ सोमराजी Ba, Jn, Pa, Ss (T), Su (b), Vs, Wc. ९. ६ मालिनी मांम्याम् स्यात् Rm, Wg ९. ७ स्याद्रौ स्रग्विणी Ba, Jn, Pa, Ss (T), Su (b), Vs, Wc. ९. ८ स्याद्रसौ कुलकम् Pa. ९. ९ सयुग रमणी Rm, Wg.

* १२. १ चूडामणिस्तभगाः (गात् Nr) Ba, Bb Jn, Nr, Pa, Ss (T), Wb १२. २ मधुमति ननगाः Ba, Bb, Jn (T), Nr, Pa, Sk, Sm (T), Ss (T), Su (b), Vs, Wb, Wc. १२. ३ मधुमती नभगाः Jn (v. l ), Rm.

---

1. गः श्री॰ Ba, Pb, Sm (b), Su (a, b, c), गु श्रीः Br, Nr, Pa. 11. कुमारललिता॰ Ba, Bb, Br, Jn, Rm, PA, Sm, Ss, Wa, Wb, Wc, Wg; कुमाररतिका॰ Vs 12. सरगैर्हंस॰ Ba, Br, Pa, Wa, Wb, Wc, Wg. 11 and 12 are dropped in Pb and Sk.

वितानमाभ्यां यदन्यत्* ॥ १९ ॥ रान्नमाविह हलमुखी ॥ २० ॥ भुजगशिशुभृता नौ मः* ॥ २१ ॥ म्मौ जगौ शुद्धविराडिदं मतम् ॥ २२ ॥ म्नौ ज्गौ चेति पणवनामेदम् ॥ २३ ॥ जौं रगौ मयूरसारिणी स्यात् ॥ २४ ॥ भ्मौ सगयुक्तौ रुक्मवतीयम् ॥ २५ ॥ ज्ञेया मत्ता ममसगयुक्ता ॥ २६ ॥ नरजगैर्भवेन्मनोरमा ॥ २७ ॥ त्जौ जो गुरुणेयमुपस्थिता* ॥ २८ ॥ स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ २९ ॥ उपेन्द्रवज्रा जतजास्ततो गौ ॥ ३० ॥ अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम ॥ ३१ ॥ नजजलगैर्गदिता सुमुखी ॥ ३२ ॥ दोधकवृत्तमिदं भभभाद्गौ ॥ ३३ ॥ शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ॥ ३४ ॥ वातोर्मीयं गदिता म्भौ तगौ गः ॥ ३५ ॥ म्भौ न्लौ गः स्याद् भ्रमरविलसितम् ॥ ३६ ॥

* १९. १ कुमारललिता ज्सौ गौ Vs १९. २ (A) नाराचक तरौ लगौ Bb, Jn, Ss, Su(b), Vs, Wa, Wb, (B) नाराचिका० Pa, Nr, Rm, Wa, Wo, Wg. १९. ३ नागरक भरौ लगौ Rm, Wg. १९. ४ जौं गगौ च सिंहलेखा Ba, Jn, Su, Vs.

* २१ १ स्यान्मणिमध्य भान्मसयुक् Jn २१. २ भद्रिका भवति रो नरौ Ba, Jn (T), Pa Ss, Su, Vs, Wo, भद्रिकेति रनैरियम् Nr (T), Wb.

* २८. १ त्वरितगतिस्तु नजनगैः Rm, Wg. २८. २ दीपकमाला चेद् भमौ जगौ Ba, Jn. २८. ३ दीपकमाला चेद् द्वौ म्नौ तगौ Pa, Wo. २८. ४ चम्पक ( पञ्चक Bb, Wb. ) माला चेद् भमसाद्गः ( सादुगुः Pa, सा गः Rm ) Bb, Jn, Pa, Rm, Sk (T), Ss (T), Su (b), Wb, Wo, Wg. २८. ५ म्नौ ज्गौ चेति पणवनामकम् Ba, Br, Nr, Pa, Pb, Wa, Wr. २८. ६ ज्ञेया ( उक्ता Bb ) हंसी ममनगयुता ( - सम Bb ) Ba, Bb, Jn ( Wrongly - युक्ता ). २८. ७ रश्च सौ सगुरुर्मणिरागः Rm, Wg २८. ८ त्रिसगा अपि मेघवितानम् Rm, Wg.

21.- शिशुसुता० Br, Pb, Sm, Su (a, b), Wa 26. मत्ता ज्ञेया०Pa, Pb ( another name हंसी Vs ) 28. This is dropped by Rm, Sk, Ss, Vs 31 ab.-भाज पादा यदीया उप० Ba, Vs (the latter rejects the dual reading). 35 कथिता (for गदिता) Br, Nr, Pb. 36. - भ्रमरविलसिता Ba, Bb, Jn, Sl, Sm, Ss

पञ्चरसैः श्रीर्भतनगगैः स्यात् ॥ ३७ ॥ रो नराविह रथोद्धता लगौ ॥ ३८ ॥ स्वागतेति रनभाद्गुरुयुग्मम् ॥ ३९ ॥ ननसगगुरुरचिता वृन्ता ॥ ४० ॥ ननरलगुरुभिश्च भद्रिका ॥ ४१ ॥ श्येनिका रजौ रलौ गुरुर्यदा ॥ ४२ ॥ उपस्थितमिदं ज्सौ ताद्गकारौ* ॥ ४३ ॥ चन्द्रवर्त्म गदितं तु रनभसैः ॥ ४४ ॥ जतौ तु वंशस्थमुदीरितं जरौ ॥ ४५ ॥ स्यादिन्द्रवंशा ततजै रसयुतैः ॥ ४६ ॥ इह तोटकमम्बुधिसैः प्रथितम् ॥ ४७ ॥ द्रुतविलम्बितमाह नभौ भरौ ॥ ४८ ॥ वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ॥ ४९ ॥ प्रमुदितवदना भवेन्नौ ररौ ॥ ५० ॥ नयसहितौ न्यौ कुसुम-

---

* ४३. १ शिखण्डितमिद ज्सौ त्गौ गुरुश्चेत् ( - ज्सौ तो गुरू चेत् Ba ) Ba, Bb, Jn (T), Pa, Ss, Va. ४३. २ शिखण्डितामिद ज्सौ रगौ गश्चेत् Wb. ४३. ३ त्सौ ज्गौ गुरुणेयमुपस्थितोक्ता Ba, Bb, Rm, Sk, Ss (T), Wb, Wg. ४३. ४ विध्यङ्गमाला भवेत्तौ तगौ गः Ba. ४३. ५ अमुविलासो नतनलगवः Ss, Wb ४३. ६ कुपुरुषजनिता ननौ गौं गः Nr, Pa ४३. ७ ननरलगयुतेह चन्द्रिका Bb, Wg. (See 8. 41 ) ४३. ८ अनवसिता न्यौ म्गौ गु षडन्ते Nr, Pa ४३. ९ भवति नो रसौ कामदा लगौ Va. ४३. १० (A) मौक्तिकमाला यदि भतनाद्गौ Bb, Jn, Nr, Pa, Pb, Rm, Sm (b), Ss, Su (a, b), Wb, Wo, Wg, - भतनगगाश्चेत् Ba, (B) सान्द्र( भद्र० Wb )पद म्तौ नगगुरुभिश्च Ss, Wb. ४३. ११ सान्द्रपदं भ्तौ नगलघुभिश्च Ba, Bb, Jn (T), Pa, Su (a b), Va. ( - स्याद् भतनलगैश्च Ba. ). ४३. १२ मः सो जो गुरुयुग्ममेकरूपम् Rm ( - युग्म चैकरूपम् Wrongly Wb ). ४३. १३ उपचित्रमिद ससमा लगौ Nr, Pa, Va.

---

37. स्त्री ( for श्री ) Rm, Wg, बाणरसै स्यात् . .. श्री. Nr, Pa, बाणरसै श्रीर्भ ... श्च Wo 38. रान्नराविह० Bb, Br, Nr, Pa, Pb, Rm, Sk, Ss 40. वृत्ता ( for वृन्ता ) Ba, Bb, Br, Pa, Pb, Rm, Sm, Ss, Wa, Wo, Wg ( the last three and Rm notice वृन्ती as another name). 41. सु for च Rm, Wo, Wg. - लगयुतेह चन्द्रिका Bb, Wg, ( also Rm ). 42. वैतिक ( for श्येनिका ) Rm, Wg. 44. - त्नगदन्ति र० Br, Nr, Wa. 47. प्रमितम् Rm, प्रमि स् Su (b), कथितम् Su (a) ( for प्रथितम् ) 49. मुनिशरविरतिर्नौ० Nr, Pa, Pb, Va. 50. - नौ च रौ Br, Nr.

विचित्रा ॥ ५१ ॥ रसैर्जसजसा जलोद्धतगतिः ॥ ५२ ॥ भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥ ५३ ॥ रैश्चतुर्भिर्युता स्रग्विणी संमता ॥ ५४ ॥ भुवि भवेन्नभजरैः प्रियंवदा ॥ ५५ ॥ त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥ ५६ ॥ धीरैरभाणि ललिता तभौ जरौ ॥ ५७ ॥ प्रमिताक्षरा सजससैरुदिता ॥ ५८ ॥ ननभरसहिताभिहितोज्ज्वला ॥ ५९ ॥ पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ ६० ॥ अब्ध्यङ्गैः स्याज्जलधरमाला म्भौ स्मौ ॥ ६१ ॥ इह नवमालिनी नजपरौ भ्यौ ॥ ६२ ॥ भवति नजावथ मालती जरौ ॥ ६३ ॥ इति वद तामरस नजजाद्यः* ॥ ६४ ॥ तुरगरस-

* ६४. १ चतुर्जगण वद मौक्तिकदाम Ba, Bb, Jn (T), Nr (T), Ss (T), Su (b), Vs, Wb, जजाविह मौक्तिकदाम जजौ चेत् (v l.) Ba, Bb, Jn, Sk. ६४. २ (A) जतौ जरौ शुद्धविराडिद मतम् Jn, Vs, (B) मनीषिणः केऽपि वसन्तमञ्जरी Ba. ('See वंशस्थ ३. ४५). ६४. ३ जभौ जरौ वदति पञ्चचामरम् Nr (T), Pa ६४. ४ (A) जरौ जरौ वदन्ति पञ्चचामरम् Ba, Bb, Jn (T), Sk, Sm (T), Su (b), Vs, Wb, (B) विभावरी तु सा जरौ जरौ यतः Wb, (C) जरौ जरौ मत वसन्तचामरम् Jn, Pa ६४. ५ त्यौ त्याविति (विह Ba) निर्दिष्टा पुष्पविचित्रा Ba, Bb, Ps Sm (T), Wb. ६४. ६ (A) भवति तर्विर्नजजै रसयुतैः Pa, Vs, Wb, (B) वरतनुरत्र नजौ जरौ भवेत् Ba. ६४. ७ ललितमभिहित नौ म्रौ नामतः Ba, Br (T), Nr, Pa, Pb, Ws. ६४. ८ नयुगरयुगल च गौरी मता Nr, Pa, नयुगरयुगयुक्च गौरी मता Ba, Br (T), Pb, Wa See 8 60 ६४. ९ स्वरशरविरतिर्ननौ रौ प्रभा Ba, Bb, Br, Jn (T), Nr (T), Pa, Rm, Sk, Sm (T), Ss (T), Su (b), Va, Wb, Wg ६४. १० द्रुतपदं नभजयैः कलित स्यात् Ss. ६४. ११ द्रुतपदं भवति नभनयाश्चेत् Nr Pa; द्रुतपद [-हृतपद- Br] नभनयरचित स्यात् Ba, Br (T), Ss, Wa ६४. १२ पञ्चमुनी म्मौ सास्सयुता ललना Ba, Br (T- ललिता), Nr, Pa, Pb, Wa.

57. dropped by Vs. 59. -महितोज्ज्वला Br, Nr, Pa, Pb Wa, Wc. 61. अब्ध्यष्टाभिर्जल० Br, Nr, Rm, Pa, Pb, Wa, Wc, अब्ध्यंशैः. स्त्रजल० Rm (v l). 62. -नवमालिका० Wa, -वनमालिका० Wr. -नवमालिका नजभयै स्यात् Br, Nr, Pa, Pb 63. मालिनी (for मालती) Wg, dropped by Br. 64. इह (for इति) Ba, Jn, Sm, Wc. अभिनवता० Br, Nr, Pa, Pb, Wa, Wb, dropped by Vs.

यतिर्नौ ततो गः क्षमा ॥ ६५ ॥ म्नौ म्रौ गस्त्रिदशयतिः प्रहर्षणीयम् ॥ ६६ ॥ चतुर्ग्रहैरिह रुचिरा जभौ स्जगाः ॥ ६७ ॥ वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ६८ ॥ सजसा जगौ भवति मञ्जुभाषिणी ॥ ६९ ॥ ननतरगुरुभिश्चन्द्रिकाश्वषड्भिः* ॥ ७० ॥ म्तौ न्सौ गावक्षग्रहविरतिरसंबाधा ॥ ७१ ॥ ननरसलघुगैः स्वरैरपराजिता ॥ ७२ ॥ ननभनलगिति प्रहरणकलिता ॥ ७३ ॥ उक्ता वसन्ततिलका तभजा जगौ गः

---

* ७०. १ जतौ सजौ गो भवति मञ्जुवादिनी Wb, -मञ्जुहासिनी Ba, Jn, Vs, -मञ्जुभाषिणी Bb; -मन्दभाषिणी Pa, Su (b), Wc. ७०. २ उपस्थितमिदं ज्सौ त्सौ सगुरुकं चेत् Bb, Nr, Wb, -त्सौ यदि गुरुः स्यात् Ba, Jn, Su (b), Vs. ७०. ३ वेदैर्ग्रहैस्तभरा जगौ प्रभावती Wb ७०. ४ वेदग्रहैस्तत (r. भ)-सजगाः प्रभावती Su (b) ७०. ५ भवति मृगेन्द्रमुख नजौ जरौ गः Ba ७०. ६ कुटिल (कुटज Jn) गतिर्नजौ सतभिस्तौ गुना (गुरुः Ba) Ba, Jn, Ss, Vs. ७०. ७ ननततगुरुभिश्चन्द्रिकाश्वर्तुभि. Bb, Jn, Nr, Pb, Sk, Sm, Vs, Wc ७०. ८ भवति भुवि ननरुरैगेन गौरी Wb ७०. ९ ऋतुमुनियतिर्विगुन्नसौ तौ गुरुः Nr, Pa ७०. १० नसरयुगैश्चन्द्रलेखर्तुलोकैः Nr, Pa, Wc ७०. ११ यमौ रौ विख्याता चञ्चरीकावली गः Ba, Br (T), Nr, Pb, Rm, Wg. ७०. १२ सजसा जगौ यदि तदा सुनन्दिनी Su (b) ७०. १३ (a) इह नन्दिनी सजससैर्गुरुयुक्तैः Ba, Wb; नवन° Ss, Vs, ननु न° Jn. (b) सजसा भवेदिह सगौ कुटजाख्यम् Jn, Ss, Su (b), Vs.

---

66. प्रहर्षिणीदम् Ba, Bb, Jn, Nr, Pa, Sk, Sm (b), Wa, Wc, Wg 67. अति Nr, Pa, Wa Wc; इति Br, Pb (for इह). -जभसजगाः Br, Nr. -जभौ सजौग् Bb, Sm (a) -रतिरुचिराम्बुधिग्रहैः. Pa. 70 - चतुर्भिः (for श्वषड्भिः) Ba, Br, Ss, Su(b), Wa, Wb Dropped in Pa. 73. रघुभिः (for लगिति) Br, Nr. कलिका (for कलिता) Ba, Bb, Rm, Su (b), Vs, Wc, Wg.

॥७४॥ सिंहोद्धतेयमुदिता मुनिकश्यपेन* ॥ ७५ ॥ इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ७६ ॥ द्विः सप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत्* ॥७७॥ द्विहतहयलघुरथ गिति शशिकला ॥ ७८ ॥ स्रगिति भवति रसनवकयतिरियम् ॥ ७९ ॥ वसुहयर्यातिरिह मणिगुणनिकरः ॥ ८० ॥ ननमयययुतेयं मालिनी भोगिलोकैः ॥ ८१ ॥ भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ८२ ॥ सजना नयौ शरदशकविरतिरेला ॥ ८३ ॥ म्रौ म्यौ यान्तौ

* ७५. १ उद्धर्षिणीति कविराजवसुन्धरेण Su, -णीयमुदिता मुनि- (किल Bb, Jn,) सैतवेन Bb, Br, Jn, Nr, Pa, Pb, Sm (b), Vs, Ws, - णीति गदिता किल सैतवेन Ba. ७५. २ गोमानसेन गदिता ( कथिता Su (a) ) मधुमाधवीति Pa, Sm (b), Su (a), गोमेन सैव गदि॰ Su (c), गोभेन सेन गदि॰ Bb, Su (b), सोमेन सैव गदि॰ Wb, नागेन सैव गदि॰ Ba, Jn, गर्गेण सैव भणिता॰ Vs, नागेन सेयमुदि॰ Br, रामेण सेयमुदि॰ Wa ७५. ३ कर्णोत्पलेति गदिता कविसुन्दरेण Pa, Sm (b) ७५. ४ शोभावतीयमुदिता भुजगाधिपेन Pb.

* ७७. १ युगादिभिः कुटिलमिति मत म्भौ न्यौ गौ Jn (T), Vs ७७. २ ननतजगुरुगैः सप्तयतिर्नदी स्यात् Nr, Pa ७७. ३ ननभजगैर्गुरुश्च वसुषट् कुमारी Nr, Pa, Pb ७७. ४ (a) ननभजलग्युता धृतिरियं कथिता Ba, Jn (T), Su (b), Vs (b) ननभजला गुरुश्च भवति प्रमदा Nr, Pa ७७. ५ त्रिननगगिति वसुयति सुपवित्रम् Nr, Pa. ७७. ६ नरनरैर्लगौ च रचित सुकेसरम् Nr, Pa, Pb. ७७. ७ (a) म्भौ न्यौ गौ चेज्जलधि दश च हसवेनी Jn (T), Vs. (b) वेदे चाब्जे कुटिलमिह मभौ न्यौ गौ चेत् Pb (c) मध्यक्षामा युगदशविरामा म्भौ न्यौ गौ Nr, Pa ७७. ८ म्भौ न्यौ लगौ चेद्भवति जगति चन्द्रौरसः Jn (T), Vs. ७७. ९ लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम् Nr, Pa ७७. १० सजसेन चैव यलगेन पथ्या मता Ba. ७७. ११ (a) सजसा य्लगाश्च वसुधा सपक्षग्रहैः Ba, Bb, Jn (T), (b) सजसय्लगैरिषुखगैश्च पथ्या मता Vs, (c) सजसा यलौ गिति शरग्रहैर्मञ्जरी Nr, Pa. ७७. १२ युगादिभिः कुटिलमिति मत म्भौ न्यौ गौ Ba.

75 सिंहोन्नते॰ Nr, Rm, Pa, Sm (b), Su (b), Vs, Wc; सिंहोन्नत Br, सिंहोद्धतं॰ Pb, Wa, Wb. ति गदिता॰ Rm; तदुदिता॰ Wb, तदुदितं॰ Br, Pb, Wa. -काश्यपेन Ba, Bb, Br, Jn, Nr, Pb, Rm, Sk, Sm, Ss, Wa, Wb, Wg. 77, स्यात् ( for चेत् ) Wb. 80. मुनि ( for हय ) and -मणिगणकिरण. Rm. 83. -दशयतिरियमेला Br, Nr, Pa, Wa, - दशयतिरतिरेखा ( लेखा Wc ) Rm, Wc, Wg; -नयौ च शरदशयतिरिहैला Ba.

भवेतां सप्ताष्टकैश्चन्द्रलेखा* ॥ ८४ ॥ भ्रत्रिनगैः स्वरात्खमृषभगजविलसितम् ॥ ८५ ॥ नजभजरैः सदा भवति वाणिनी गयुक्तैः* ॥ ८६ ॥ रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ ८७ ॥ जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ ८८ ॥ दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ८९ ॥ रसयुगहयैन्सौं म्रौ स्लौ गो यदा हरिणी तदा ॥ ९० ॥ मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ॥९१॥ यदि भवतो

* ८४. १ छन्दो भवेत्तभजजै रयुतैर्मृदङ्गकम् Bb, Wb ८४. २ नजभजरैर्विराजितमिद सुकेसरम् Ba, Bb, Nr, Pa, Su (a, b), Wb ८४. ३ ननतभरकृताङ्कैः (कृताष्ट Bb) स्वरैरुपमालिनी Bb, Pa, Nr ८४. ४ मा बाणा यस्यां सा कामक्रीडासञ्ज्ञा ज्ञातव्या Ba, Bb, Jn (T), Sk, Ss (T), Su (b), Wb, मा बाणाः स्युर्यस्या सा कामक्रीडासंज्ञा ज्ञेया (सुज्ञातव्या Pa, सज्ञातव्या Vs,) Nr, Pa Vs, कामक्रीडा छन्दो जात कृत्वा माम्या मम्मैर्वा Su (b, v. 1) ८४. ५ राजमद्वितयरैरुदित रमणीयकम् Ba, Jn (T), Su(b), Vs. ८४. ६ चन्द्रकान्ताभिधा रौ म्यौ यो विरामः स्वराष्टौ Ba, Bb, Jn (T), Vs, चन्द्रलेखाभिधा॰ Nr ८४. ७ चन्द्रलेखाभिधान भवेत्पञ्चभी रैः स्फुटम् Pa, Wb. ८४. ८ भवतः सजौ ससयुता वृषभस्ततो यः Jn (T), Vs ८४. ९ सगणैः शिववक्त्रमितैः कथिता (गदिता Ba) नलिनी Ba, Su (b).

* ८६. १ जरौ जरौ ततो जगौ च पञ्चचामर वदेत् Nr; जरौ जरौ जगाविदं वदन्ति पञ्चचामरम् Bb, Vs, Wb, लघुर्गुरुर्निरन्तर (रौ Jn) यदा स (यदीह Pa) पञ्चचामरः (॰रम् Pa, Wa) Ba, Jn, Pa, Pb, Wa. ८६. २ नजरभभेन गेन च स्यान्मणिकल्पलता Ba, Jn, Vs. ८६. ३ संकथिता भरौ नरनगाश्च वीरललिता Nr, Pa. ८६. ४ पञ्चभकारयुताश्वगतिर्यदि चान्त्यगुरुः Nr;-युता खगतिर्यदि चान्तगुरुः Pb, Wa; -कृताश्व(स्व Wb)गतिर्यदि चा (वा Jn)-न्तगुरुः Ba, Jn, Pa, Vs, Wb, -कृताश्व...गदितान्तगुरुः Bb ८६. ५ चित्रसंज्ञमीरित रजौ रजौ रगौ च वृत्तम् Nr, Pa

84. - सप्ताष्टभिश्च॰ Ba, Br, Nr, Rm, Sm, Su (b), Wa, Wb, Wo, Wg. 85. भ्रौ त्रिनगा. स्वरात्(स्वरा. Rm) खम्॰ Br, Pb, Rm. 86. तदा (for सदा) Vs., नजभजतैः॰-गान्वितैः Rm, Wg.

॥७४॥ सिंहोद्धतेयमुदिता मुनिकश्यपेन* ॥ ७५ ॥ इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ७६ ॥ द्विः सप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत्* ॥७७॥ द्विहतहयलघुरथ गिति शशिकला ॥ ७८ ॥ स्रगिति भवति रसनवकयतिरियम् ॥ ७९ ॥ वसुहययतिरिह मणिगुणनिकरः ॥ ८० ॥ ननमयययुतेयं मालिनी भोगिलोकैः ॥ ८१ ॥ भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ८२ ॥ सजना नयौ शरदशकविरतिरेला ॥ ८३ ॥ म्रौ म्यौ यान्तौ

* ७५. १ उद्धर्षिणीति कविराजवसुन्धरेण Su; -णीयमुदिता मुनि-(किल Bb, Jn,) सैतवेन Bb, Br, Jn, Nr, Pa, Pb, Sm (b), Vs, Wa, - णीति गदिता किल सैतवेन Ba. ७५. २ गोमानसेन गदिता (कथिता Su (a)) मधुमाधवीति Pa, Sm (b), Su (a), गोगेन सैव गदि° Su (c), गोभेन सेन गदि° Bb, Su (b), सोमेन सैव गदि° Wb, नागेन सैव गदि° Ba, Jn, गर्गेण सैव भणिता° Vs, नागेन सेयमुदि° Br, रामेण सेयमुदि° Wa ७५. ३ कर्णोत्पलेति गदिता कविसुन्दरेण Pa, Sm (b) ७५. ४ शोभावतीयमुदिता भुजगाधिपेन Pb.

* ७७. १ युगादिभिः कुटिलमिति मत म्भौ न्यौ गौ Jn (T), Vs. ७७. २ ननतजगुरुगैः सप्तयतिर्नदी स्यात् Nr, Pa ७७. ३ ननभजगैर्गुरुश्च वसुषट् कुमारी Nr, Pa, Pb ७७. ४ (a) नजभजलग्युता धृतिरियं कथिता Ba, Jn (T), Su (b), Vs (b) नजभजला गुरुश्च भवति प्रमदा Nr, Pa ७७. ५ त्रिननगगिति वसुयति सुपवित्रम् Nr, Pa. ७७. ६ नरनरैर्लगौ च रचित सुकेसरम् Nr, Pa, Pb ७७. ७ (a) म्भौ न्यौ गौ चेज्जलधि दश च ह्वश्येनी Jn (T), Vs. (b) वेदे चाब्जे कुटिलमिह मभौ न्यौ गौ चेत् Pb. (c) मन्दाक्रामा युगदशविरामा म्भौ न्यौ गौ Nr, Pa ७७. ८ म्भौ न्यौ सौ चेद्भवति जगति चन्द्रोरसः Jn (T), Vs. ७७. ९ लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम् Nr, Pa ७७. १० सजसेन चैव यलगेन पथ्या मता Ba ७७. ११ (a) सजसा यलगाश्च वसुधा सपञ्चग्रहैः Ba, Bb, Jn (T), (b) सजसयलगैरिषुखगैश्च पथ्या मता Vs, (c) सजसा यलौ गिति शरग्रहैर्मञ्जरी Nr, Pa. ७७. १२ युगादिभिः कुटिलमिति मत म्भौ न्यौ गौ Ba.

75 सिंहोन्नते° Nr, Rm, Pa, Sm (b), Su (b), Vs, Wc; सिंहोन्नतं Br, सिंहोद्धतं Pb, Wa, Wb. ति गदिता° Rm, नदुदिता° Wb. तदुदिता° Br, Pb, Wa. -काश्यपेन Ba, Bb, Br, Jn, Nr, Pb, Rm, Sl, Sm, Ss, Wa, Wb, Wg. 77 स्यात् (for चेत्) Wb. 80 मुनि (for हय) and -मणिगणकिरण Rm 83. -दशयतिरियमेला Br, Nr, Pa, Wa, - दशयतिरतिरेखा (लेखा Wc) Rm, Wc, Wg; -नयौ च शरदशयतिरिहैला Ba.

भवेतां सप्ताष्टकैश्चन्द्रलेखा* ॥ ८४ ॥ भ्रत्रिनगैः स्वरात्खमृषभगजविलसितम् ॥ ८५ ॥ नजभजरैः सदा भवति वाणिनी गयुक्तैः* ॥ ८६ ॥ रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ ८७ ॥ जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ ८८ ॥ दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ८९ ॥ रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ॥ ९० ॥ मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ॥९१॥ यदि भवतो

* ८४. १ छन्दो भवेत्तभजजै रयुतैर्मृदङ्गम् Bb, Wb ८४. २ नजभजरैर्विराजितमिद सुकेसरम् Ba, Bb, Nr, Pa, Su (a, b), Wb ८४. ३ ननतभरकृताङ्गैः ( कृताष्ट Bb ) स्वरैरुपमालिनी Bb, Pa, Nr ८४. ४ मा त्राणा यस्यां सा कामक्रीडासज्ञा ज्ञातव्या Ba, Bb, Jn (T), Sk, Ss (T), Su (b), Wb, मा त्राणाः स्युर्यस्या सा कामक्रीडासंज्ञा ज्ञेया (सुज्ञातव्या Pa, सज्ञातव्या Vs, ) Nr, Pa Vs, कामक्रीडा छन्दो जात कृत्वा माम्या मम्मैर्वा Su (b, v. 1). ८४. ५ रान्नभद्वितयैरुदित रमणीयकम् Ba, Jn (T), Su(b), Vs. ८४. ६ चन्द्रकान्ताभिधा रौ म्यौ यो विरामः स्वराष्टौ Ba, Bb, Jn (T), Vs, चन्द्रलेखाभिधा० Nr. ८४. ७ चन्द्रलेखाभिधान भवेत्पञ्चभी रैः स्फुटम् Pa, Wb. ८४. ८ भवतः सजौ ससयुता वृषभस्ततो यः Jn (T), Vs ८४. ९ सगणैः शिववक्त्रमितैः कथिता ( गदिता Ba ) नलिनी Ba, Su (b).

* ८६. १ जरौ जरौ ततो जगौ च पञ्चचामरं वदेत् Nr, जरौ जरौ जगाविदं वदन्ति पञ्चचामरम् Bb, Vs, Wb; लघुर्गुरुर्निरन्तर ( रौ Jn ) यदा स ( यदीह Pa ) पञ्चचामरः ( ०रम् Pa, Wa ) Ba, Jn, Pa, Pb, Wa. ८६. २ नजरभभेन गेन च स्यान्मणिकल्पलता Ba, Jn, Vs ८६. ३ संकथिता भरौ नरनगाश्च वीरललिता Nr, Pa. ८६. ४ पञ्चभकारयुताश्वगतिर्यदि चान्त्यगुरुः Nr;- युता खगतिर्यदि चान्तगुरुः Pb, Wa; - कृताश्व(स्व Wb)गतिर्यदि चा (वा Jn)-न्तगुरुः Ba, Jn, Pa, Vs, Wb, -कृताश्व..।गदितान्तगुरुः Bb. ८६. ५ चित्रसज्ञमीरित रजौ रजौ रगौ च वृत्तम् Nr, Pa.

84. - सप्ताष्टभिश्च० Ba, Br, Nr, Rm, Sm, Su (b), Wa, Wb, Wo, Wg. 85. भ्रौ त्रिनगा· स्वराद्( स्वरा. Rm ) खमृ० Br, Pb, Rm. 86. तदा ( for सदा ) Vs., नजभजतै.०-गान्वितैः Rm, Wg.

नजौ भजजला गुरु नर्कुटकम् ॥ ९२ ॥ मुनिगुहकार्णवैः कृतयतिं वद कोकिलकम् ॥ ९३ । स्याद्भूतर्त्वश्वै· कुसुमितलतावेल्लिता म्तौ नयौ यौ*

* ९३. १ समदविलासिनी नजभजैम्लगैरिनशरैः [Bb] * ९३. २ रसयुगहयग्रुह् ( कैर् [Pb] ) नौ म्रौ सो लगौ ( स्लौ सगौ [Pb] ) हि यदा हरिः [Nr, Pb] ९३ ३ नजभजेषु गौ यदि वदन्ति च वाणिनीं ताम् [Wb] ९३. ४ भवेत्कान्ता युगरसहयैर्यभौ नरसा लगौ [Nr.] ९३ ५ ससजैरतिशायिनी मता (भवेत् [Pa, Wb]) भजपरैर्गुरुम्याम् [Ba, Jn (T), Pa, Wb] ९३. ६ (a) ससजा भजगा गु दिक्स्वरैर्भवति चित्रलेखा [Nr, Pa,] (b) ससजा भजगा गुरुश्च सप्तविरतिर्द्रुता स्यात् [Vs]

* ९४. १ भवति नयुगलं रभौ रौ दशभिर्गिगेन्द्रैर्लता [Su (b),] - भिर्गजेन्द्रैर्लता [Ba] ९४. २ (a) इह ननरचतुष्कमिष्ट तु नाराचमाचक्षते [Wb;] (b) यदिह (च [Ba] ) नयुगल ततो वेदरफैर्महामालिका [Ba, Br (T), Nr, Pa, Pb, Wa,] (c) कथितमिह ननौ ररौ चेद्ररौ सिंहविक्रीडितम् [Rm, Wg] ९४. ३ दशवसुविरतिर्ननौ रैश्चतुर्भिर्युता लालसा [Jn, (T), Pa, Su (b), Vs, Wb,] - लालसी [Ba;] - सालसा [Bb.] ९४. ४ (a) त्र्यधिकदशयतिर्ननौ रौ मरेता रगौ तारका [Ba, Jn (T),] (b) त्रियुतदशशरच्छिदुक्ता ननौ रौ ततो रौ निशा [Su (b),] (c) त्र्यधिकदशयतिर्ननौ रौ ररौ†च प्रिया [Wb,] दशशिखिशरभूविरामा ननौ रौ ररौ च प्रिया [Pa.] ९४. ५ पञ्चमकारकृताश्वगतिर्यदि चान्तसरचिता [Nr,] - न्तसनिरता· [Br (T), Pb, Wa] ९४. ६ भाद्रनना नसौ भ्रमरपदकमिदमभिहितम् [Nr, Pa] ९४. ७ वर्णैश्चैर्मननततमकः कीर्तिता चित्रलेखेयम् [Nr, Pa] ९४. ८ म्भौ न्जौ भ्रौ चेच्चलमिदमुदित युगैर्मुनिभिः स्वरैः [Nr, Pa] ९४. ९ अर्थाश्वाश्वैर्मभनयरयुगैर्वृत्त मत्तकेशरम् [Nr.] ९४. १० मात्सो जौ भरसयुतौ करित्राणकै ( खै [Ba] )र्हरिणप्लुतम् [Ba, Br (T), Nr, Pa, Pb, Wa,] - कैर्हरनर्तकम् [Wg (See below No. 14)] ९४. ११ शार्दूल वद मासषट्कयति मः सो जसौ रो भश्चेत् [Nr] ९४. १२ सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नसतसाः [Ba, Nr, Wc] ९४. १३ स्याद् ( तत् [Ba] ) भूतर्त्वश्वैर्मौ म्भौ विरतिश्चेत् सिंहविस्फूर्जित यौ [Ba, Jn (T), Su (b), Vs]

92. लघु ( for गुरु ) Ba, Wa हयदशभिर्नजौ० Nr, Pa, Pb, Wa, Wg, हयदश० गुरु सत्कुटकम् Rm, Wg. 93. - कृतयति वद० Nr, Pa, Pb, Wc, - कृतयतिर्वद० Wa, - कृतयतिर्वनको० Wg 94 स्याद्भाणर्त्वश्वै.० Su (ac). †3 letters missing.

॥ ९४ ॥ रसत्वैश्चैय्मौं न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात् ॥ ९५ ॥ सूर्याश्वैर्मसजाः स्तताः सगुरवः शार्दूलविक्रीडितम्* ॥ ९६ ॥ ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना ॥ ९७ ॥ त्री रजौ गलौ भवेदिहेद्दशेन लक्षणेन वृत्तनाम* ॥ ९८ ॥ म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्* ॥ ९९ ॥ भ्रौ नरना रनावथ गुरुर्दिग-

९४. १४ सौं जजौ भरसयुतौ करिबाणकैः( खे Ba.)र्हरनर्तकम् Ba, Rm; - बाणखं हरनर्तकम् Jn (T). ९४. १५ सौं जया भरसयुतावृतुबाणाश्वैरैरुक्तनम् Bb.

* ९६. १ गजाब्धितुरगैर्नसौ जमतभा गश्चेत्समुद्रतता Nr. ९६. २ नजभयसा जगौ च रचना शूलिककुम्भिरत्र सा Jn (T), Su (b). ९६ ३ नजभयभा जगौ च रचना मुन्यर्कयतिरत्र सा Ba ९६. ४ नयुगललगुरु निरन्तरं यदा स पञ्चचामरः Nr, pb, Wa, नयुगलगलघुर्निर० Br, नयुगगुरुलघुर्नि० Wr ९६. ५ वृत्त त्रिम्बाख्य शरमुनितुरगैर्म्तौ न्सौ ततौ चेद्गुरुः Nr. ९६. ६ भूताश्वाश्वान्त मतनसररगैः कीर्तितं पुष्पदाम Nr. ९६. ७ इनाश्वैर्या यभनयजजगाः कीर्तिता मणिमञ्जरी Nr. ९६. ८ रसैः षड्भिर्लोकैर्यमनमजजा गुरुर्मकरन्दिका Nr, Pa ९६ ९ इयं छाया ख्याता ऋतुरसहयैर्यौ मनसा स्तौ गुरुः Nr ९६ १० मौं जतौ तौ सगुरुकौ यदा दिग्ग्रहच्छेदभाग्वह्लकी Ba, Su (b); - यदा दिग्ग्रहच्छेदभाग्० Jn (T).

* ९८. १ ख्याता पूर्वैः सुवशा यदि मरमनास्तद्वय गो गुरुश्च Ba, Jn (T), Su (b) ९८. २ रसैरश्वैरश्वैर्यमननततगैर्गेन शोभेयमुक्ता Nr, Pa ९८ ३ सजजा भरौ सलगाश्च चेदुदित तदा प्रमदाननम् Rm, Wg ९८. ४ समरा न्म्या लगिति त्रयोदशयतिर्मत्तेभविक्रीडितम् Wg, सभरान्मौ यलगाश्च० (Rm v 1) समरा नम्यलगिति० Rm.

* ९९. १ (a) भवति नजौ हि सिद्धिरिति भाजजजा यदि गे भवेदितः ( दिह Ba )Ba, Jn (T), Pa; (b) सलिलनिधिर्भवेदिह नजौ भगणो जगणात्त्रयश्च रः Nr. ९९. २ नजभजजाजरौ हरहरिद्विरतिः खलु पचकावली Vs. ९९. ३ भौ ममभाश्च मरौ यदि कीर्तय पुत्रक मत्तविलासिनीम् Rm, Wg.

95. युनौ ( for युता ) Rm. Dropped by Nr and Vs 96 मसजस्तता. Br, Jn, Nr, Pb, Sk, Sm, Ss, Su (c), Vs. 97. युतौ ( for युता ) Rm. Dropped by Vs.

केश्विरसं हि मद्रकमिदम्* ॥ १०० ॥ यदिह नजौ भजौ भ्जभलगास्त-दाश्वललितं हराकेयतिमत् ॥ १०१ ॥ मत्ताक्रीडं मौ त्नो नो न्लौ गिति भवति वसुशरदशयतियुतम्* ॥ १०२ ॥ भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी ॥ १०३ ॥ क्रौञ्चपदा भ्मौ स्भौ ननन-न्या इषुशरवसुमुनिविरतिरिह भवेत् ॥१०४॥ वस्वीशाश्वच्छेदोपेतं ममत-नयुगनरसलगैर्भुजङ्गविजृम्भितम् ॥ १०५ ॥ मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम्* ॥१०६॥ यदिह नयुगलं ततः सप्त रेफास्तदा चण्डवृष्टिप्रयातो भवेद्दण्डकः ॥१०७॥ प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥१०८॥ प्रचितकसम-भिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ॥ १०९ ॥ ॥ इति भट्टकेदारविरचिते वृत्तरत्नाकराख्ये छन्दसि मात्रावृत्तवर्णनो नाम तृतीयोऽध्यायः ॥ ३ ॥ [ ग्रं० श्लो० ४५ ]

* १००. १ सप्तभकारकृतावसितौ सगुरुः कविभिः कथिता मदिरा Nr, Pa, सप्तभिरेव भकारगणैर्गुरुणा सहिता कथिता मदिरा Vs. १००. २ लालित्य भुजगेन्द्रेण भाषितमेतच्चेन्ममररसतजनगुरुः Ju (T), Su (b) १००. ३ लालित्य भुजगन्द्रभाषितमेतच्चेन्मसजभ्मभनगुरुभिः Ba १००. ४ सजता नसौ रसौ गः फणितुरगहयैः ( युगैः Bb ) स्यान्महास्रग्धराख्या Ba, Bb, Ju (T), Su (b).

* १०२. १ मैरथ सप्तभिरत्र कृता गुरुणा गुरुणा च मयुरगतिः स्यात् Rm, Wg

* १०६. १ म्यौ न्तौ नौ रसौ स्गौ यदि च आहुर्वसुमदनदहनर्षिभिर्भुजगे-रितं Ss. १०६. २ म्यौ न्यौ ( v. न्तौ ) नौ रयौ लगौ ( v. लौ ) यदि० भुजगेरित Wb. १०६. ३ यत्किञ्चिद्दृश्यते छन्दः षड्विंशत्यधिकाक्षरम् । शेषजात्यादिक मुक्त्वा तत्सर्वं दण्डकानिह ॥ Ju (T). Ju introduces this verse as the सामान्यलक्षण of दण्डक.

* १०९ १ नद्वयात्परतस्तकारेणापि कश्चिद्दण्डका दृश्यन्ते Rm. १०९. २ एवमेकोनसहस्राक्षरवृद्धिर्भवति दण्डक वृत्तम् Rm.

100. मद्रक ( for मद्रकं ) Br, Ju, Nr, Pa, Pb, Sk, Sm, Ss, Su (a, b), प्रमद्रकं ( for हि मद्रकं ) Rm, Ss, Vs 101. -भजौ भजभलग् तदा० Rm; तदश्व ( for तदाश्व) Br, Nr 102. मत्ताक्रीडा० युता Br, Nr, Pa, Pb, Rm, Vs, Wa, Wc, Wg. -स्नौ नौ नस्गिति० Br, Nr, Rm. 104 -ननना न्गाविपु० Br, Nr, Pa, Pb, Rm, Ss; -नननन्गाविपु० Ba, Vs; -नचतुष्कं गयुतमिषुवसु० Ba; ( -नचतुष्क गुरु च शरविषयवसुमु-निविरतिः v. l. noted by Ju ).

## ॥ चतुर्थोऽध्यायः ॥

विषमे यदि सौ सलगा दले
भौ युजि भाद्गुरुकावुपचित्रम्* ॥ १ ॥
भत्रयमोजगतं गुरुणी चेद्
युजि च नजौ ज्ययुतौ द्रुतमध्या ॥ २ ॥
सयुगात्सगुरू विषमे चेद्
भाविह वेगवती युजि भाद्गौ ॥ ३ ॥
ओजे तपरौ जरौ गुरुश्चेन्
म्सौ ज्गौग् भद्रविराड् भवेदनोजे ॥ ४ ॥
असमे सजौ सगुरुयुक्तौ
केतुमती समे भरनगाद्गः* ॥ ५ ॥
आख्यानिकी तौ जगुरू गमोजे
जतावनोजे जगुरू गुरुश्चेत् ॥ ६ ॥
जतौ जगौ गो विषमे समे स्यात्
तौ ज्गौ ग एषा विपरीतपूर्वा ॥ ७ ॥
सयुगात्सलघू विषमे गुरु—
र्युजि नभौ च भरौ हरिणप्लुता ॥ ८ ॥

---

* १. १ सौं लगौ विषमे यदि । सजजा गुरुर्ललिता समे Nr. Pa, Vs.

* ५. १ (a) विषमे सगणौ जगौ समे । सभरा लश्च गुरुः शिखामणिः Sd. (b) विषमे ससजास्ततो गुरुः । समपादे मुरली सभर्लगाः Vs (c) ससजा विषमे यदा गुरुः । सभराः स्याल्ललिता समे लगौ Rm. (d) विषमे यदि सौ जगौ, समे । स्भरला गोऽपरवक्त्रमीरितम् Ba, Jn.

---

1. given after 4 in Pb. 2 a. - गुरुकौ चेत् Vs. 5 a. विषमे सजौ० Bb, Vs. 6. आख्यानकी० ग (गम् Bb, Ss) ओजे Ba, Bb, Br, Nr, Pa, Sd, Sk, Sm, Ss, Vs, Wa, Wb, Wc; आख्यानकी० ग ओजे Rm; आख्यातिकी० ग ओजे Wg. 7 a. चेत् (for स्यात्) Nr, Rm, Vs, Wa, Wc. 7 b. - गमेषा० Bb, Ss. 8. b. - नभौ भरकौ० Br, Nr, Vs, Wa, Wc,

अयुजि ननरला गुरुः समे
न्जमपरवक्त्रमिदं ततो जरौ * ॥ ९ ॥
अयुजि नयुगरेफतो यकारो
युजि च नजौ जरगाश्च पुष्पिताग्रा * ॥ १० ॥
वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः।
पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥ ११ ॥
स्यादयुग्मके रजौ रजौ समे तु ।
जरौ जरौ गुरुर्यवात्परा मतीयम् * ॥ १२ ॥

॥ इति भट्टकेदारविरचिते वृत्तरत्नाकराख्ये छन्दसि अर्धसमवृत्तवर्णनो नाम चतुर्थोऽध्यायः ॥४॥ [ ग्रं० श्लो० ८, अ० २६ ]

---

* ९. १ (a) ससजाः प्रथमे पदे गुरू चेत् । सभरा येन च मालभारिणी स्यात् [1a], विषमे ससजा गुरू, अनोजे ( पदे गुरू चेत् [Ba] ) । सभरा यश्च तु ( येन तु [Ba], येन च [Su (a)] ) मालभारिणीयम् [Ba, Su (a, c)], विषमे ससजेन गेन गेना— । विषमे रक्रमेण तु मालभारिणीयम् [Vs] (b) विषमे ससजा गुरू, समे चेत् । सभरा यश्च वसन्तमालिका सा [Br, Pb, Wa] (c) विषमे ससजा गुरू, अनोजे । रभरयाश्छन्दासिक तदौपपूर्वम् [Su (b), Wb]

* १०. १ अयुजि ननभभाः समकेऽपि तु । नयुगरयुगल तदा कौमुदी [Nr, Pa] १०. २ यदि विषमे भवतो नजौ जरौ । सजथाः समे जगुरू मञ्जुसौरभम् [Nr, Pa] १०. ३ रो जरौ चवयुतौ पदे पदेऽथ । युग्मे तरौ जरौ गुरुर्मृगी यवानी [Nr, Pa]

* १२. १ ओजे तपरौ भरौ जरौ गुरू समे जौ यौं । कीर्तिता बुधैरियं तु षट्पदाख्या [Nr, Pa.]

---

9 b. तदपर० नजौ जरौ Ba, Jn, Su (a), Vs. 12 a. चेत् ( for तु ) Nr, Wa, Wc; 12. b - गुरु. परा यवान्मतीयम् Vs.

## ॥ पञ्चमोऽध्यायः ॥

मुखपादोऽष्टभिर्वर्णैः ।
परेऽस्मान्मकरालयैः क्रमाद्वृद्धाः ।
सततं यस्य विचित्रैः पादैः संपन्नसौन्दर्यम् ।
तदभिहितममलधीभिः पदचतुरूर्ध्वाभिधं वृत्तम् ॥ १ ॥

प्रथमसुदितवृत्ते ।
विरचितविषमचरणभाजि ।
गुरुकयुगलनिधन इह कलित आडा ।
विधृतरुचिरपदविततियतिरिह भवति पीडः ॥ २ ॥

प्रथममितरचरणसमुत्थं ।
श्रयति जगति लक्ष्म ।
इतरदितरचरणजनितमपि तुर्यम् ।
चरणयुगलकमविकृतमपरमिति कलिका सा ॥ ३ ॥

द्विगुरुयुतसकलचरणान्ता ।
मुखचरणरचितमनुभवति तृतीयः ।
चरण इह हि लक्ष्म ।
प्रकृतमपरमखिलमपि यदि भवति लवली सा ॥ ४ ॥

---

1 b स्युर् ( for ऽस्मान् ) Ba, Br, Wa, Wo वृद्धः ( for वृद्धा ) Br, Nr, Pb. 1 c -पादैः प्रसन्नसौन्दर्यम् Vs 1 d. तदुदितममलमतिभि पद० Br, Nr, Pb, Wa, Wo. 2 c. सहित ( for कलित ) Nr, Wa, Wo गुरुयुगलकनि० Ba, Sm (a). 2 d. रिति for रिह in text Ba, Rm, Ss, Vs. लघुविरचितपदवितितियतिरिह० ( रिति० Pa, Pb ) Br, Nr, Pa, Pb, Wa, Wo, विधृतरुचिररचितपदवितियतिरिति पीड. Wg. 3 b स यदि Nr, Wa; सपदि Wo ( for जगति ). 3 c इतरदितरजनितमपि यदि च ( तु Wg ) तुर्यम् Ba, Jn, Rm, Sk, Sm, Ss, Wb, Wg; गदितं ( for जनितं in the last ) Br, Nr, Pb, Wa, Wo; सम्यक् ( for तुर्यम् in the last ) Su (b), Wa, Wo. Su (a) adds यदि च and Su (c) only च before तुर्यम्. 4 b. -णगतमनुभवति च तृतीयः ( यम् Wa ) Br, Nr, Rm, Wa; -णकगतमनुभवति तृतीयम् Wg. 4 c. च ( for हि ) Rm, Wg. अपरमिह हि० Nr 4 d. प्रकृतमखिलमपि यदिदमनुभवति० Br, Wa, Wo, प्रकृतमपरमखिलमिदमपि च भवति लवल्या. Sm, Ss, Wb. प्रकृतमपरमखिलमपि जगति भवति लवल्याः Su (b).

प्रथममधिवसति यदि तुर्यम् ।
चरमचरणपदमवसितिगुरुयुग्मम् ।
निखिलमपरमुपरितनसममिह ललितपादा
त्रितयममृतधारा ॥ ५ ॥
सजमादिमे सलघुकौ च ।
नसजगुरुकैस्तथोद्गता ।
त्र्यंह्रिगतभनजला गयुताः ।
सजसा जगौ चरणमेकतः पठेत् ॥ ६ ॥
चरणत्रयं भजति लक्ष्म ।
यदि सकलमुद्गतागतम् ।
नौ भगौ भवति सौरभकम् ।
चरणे यदीह भवतस्तृतीयके ॥ ७ ॥
नयुगं सकारयुगल च ।
भवति चरणे तृतीयके ।
तदुदितमुरुमतिभिर्ललितम् ।
यदि शेषमस्य खलु पूर्वतुल्यकम् ॥ ८ ॥
म्सौ ज्भौ गौ प्रथमांह्रिरेकतः पृथगन्यत् ।
त्रितयं सनजरगास्तथा ननौ सः ।

---

5 a मपि ( for मधि ) Ba 5 b मवम्ति ( for मवसिति ) Su (a, o) युग्मा ( for युग्म ) Rm 5 c इति ( for इह in the text ) Pa पाद- ( for पादा in the text ) Ss, Wb, Wg. अखिल ( निखिल- Nr ) मपरमुपरिगतमिति ललितपदयुक्ता Br, Nr, Pb, Vs, Wa, Wc. 5 d. तदियम० Br, Nr, Pb, Su (c), Vs, Wa, Wc. 6 b. -गुरुकेष्वथो० Bb, Jn, Rm, Pa, Sk, Sm, Ss, Su (c), Vs, Wb, Wg; -गुरुकैरथो० Br, Nr, Pb, Wa, Wc. 6 c. त्र्यंघ्रि ( for त्र्यंह्रि ) Ba, Br, Nr, Rm, Pa, Pb, Vs, Wa, Wc, Wg. 6 d. -चरममेकत ० Ss, Su (c), Wg, -चरम एकत.० Rm. 7 a. भजति ( for भजति ) Br, Nr, Pb, Wa, Wb, Wc 7 b निखिल ( for सकल ) Rm, Wg 8 b भजति चरण तृतीयक Ba, Bb, Rm, Su (a), Vs, Wg 8 d. तुल्यपूर्वकम् Bb 9 a अंघ्रि ( for अंह्रि ) Ba, Br, Nr, Pa, Rm, Wa, Wc, Wg. 9 b. ततो ( for तथा ) Br, Nr, Wa, Wc य ( for स. ) Wg.

त्रिनपरिकलितजयौ ।
प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ ९ ॥
नौ पादेऽथ तृतीयके सनौ नसयुक्तौ ।
प्रथमांह्रिकृतयति प्रवर्धमानम् ।
त्रितयमपरमपि पूर्वसदृशमिह भवति ।
प्रततमतिभिरिति गदितं खलु वृत्तम् ॥ १० ॥
अस्मिन्नेव तृतीयपादके तजराः स्युः ।
प्रथमे च विरतिरार्षभं वदन्ति ।
तच्छुद्धविराट् पुरःस्थितम् ।
त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥ ११ ॥
विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ।
यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥ १२ ॥
॥ इति भट्टकेदारविरचिते वृत्तरत्नाकराख्ये छन्दसि विषमवृत्त-वर्णनो नाम पञ्चमोऽध्यायः ॥ ५ ॥　[ ग्रं० श्लो० १९ ]

---

9 d. -मिति गदितमुप० Ba, Su (b), -मिदमपरमुप० Wg. 10 a. युक्तं ( for युक्तौ ) Br. 10 b अंघ्रि ( for अंह्रि ) Ba, Br, Nr, Pa, Pb, Rm, Vs, Wa, Wo, Wg. -यतिस्तु व० Br, Nr, Wa, Wo; -यतीह व० Pa; -यतिश्च व० Sk 10 c. -मिह हि भवेत् Vs. 10 d. प्रवरमति० Wg; विततमति० Vs. लघु ( for खलु ) Pb, Wa, Wo. 11 a. -तृतीयके यदा त० Ba, Br, Nr, Pb, Wa, Wo. 11 b ब्रुवन्ति ( for वदन्ति Br, Nr, Pb, Rm, Vs, Wa, Wb, Wo, Wg 11 d यदि dropped in Rm, Wg. 12 c. यच्छन्दसि नोक्तमत्र Rm

प्रथममधिवसति यदि तुर्यम् ।
चरमचरणपदमवसितिगुरुयुग्मम् ।
निखिलमपरमुपरितनसममिह ललितपादा
त्रितयममृतधारा ॥ ५ ॥
सजमादिमे सलघुकौ च ।
नसजगुरुकैस्तथोद्गता ।
त्र्यंह्रिगतभनजला गयुताः ।
सजसा जगौ चरणमेकतः पठेत् ॥ ६ ॥
चरणत्रयं भजति लक्ष्म ।
यदि सकलमुद्गतागतम् ।
नौ भगौ भवति सौरभकम् ।
चरणे यदीह भवतस्तृतीयके ॥ ७ ॥
नयुगं सकारयुगलं च ।
भवति चरणे तृतीयके ।
तदुदितमुरुमतिभिर्ललितम् ।
यदि शेषमस्य खलु पूर्वतुल्यकम् ॥ ८ ॥
म्सौ ज्भौ गौ प्रथमांह्रिरेकतः पृथगन्यत् ।
त्रितयं सनजरगास्तथा ननौ सः ।

---

5 a. मपि ( for मधि ) Ba. 5 b. मवभित ( for मवसिति ) Su (a, c) युग्मा ( for युग्मं ) Rm. 5 c. इति ( for इह in the text ) Pa पार- ( for पादा in the text ) Ss, Wb, Wg. अखिल ( निखिल- Nr ) मपरमुपरिगतमिति ललितपदयुक्ता Br, Nr, Pb, Vs, Wa, Wo. 5 d. तद्वियम० Br, Nr, Pb, Su (c), Vs, Wa, Wo. 6 b. -गुरुकैस्त्वथो० Bb, Jn, Rm, Pa, Sk, Sm, Ss, Su (c), Vs, Wb, Wg; -गुरुकैरथो० Br, Nr, Pb, Wa, Wo. 6 c त्र्यंघ्रि ( for त्र्यंह्रि ) Ba, Br, Nr, Rm, Pa, Pb, Vs, Wa, Wo, Wg. 6 d -चरममेकत० Ss, Su (c), Wg, -चरम एकतः० Rm. 7 a. भ्रजति ( for भजति ) Br, Nr, Pb, Wa, Wb, Wo. 7 b निखिल ( for सकल ) Rm, Wg 8 b. भजति चरण तृतीयक Br, Bb, Rm, Su (a), Vs, Wg. 8 d. तुल्यपूर्वकम् Bb 9 a. अंघ्रि ( for अंह्रि ) Ba, Br, Nr, Pa, Rm, Wa, Wo, Wg. 9 b. ततो ( for तथा ) Br, Nr, Wa, Wo. यः ( for सः ) Wg.

त्रिनपरिकलितजयौ ।
प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ ९ ॥
नौ पादेऽथ तृतीयके सनौ नसयुक्तौ ।
प्रथमांह्रिकृतयति प्रवर्धमानम् ।
त्रितयमपरमपि पूर्वसदृशमिह भवति ।
प्रततमतिभिरिति गदितं खलु वृत्तम् ॥ १० ॥
अस्मिन्नेव तृतीयपादके तजराः स्युः ।
प्रथमे च विरतिरार्षभं वदन्ति ।
तच्छुद्धविराट् पुरःस्थितम् ।
त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥ ११ ॥
विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ।
यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥ १२ ॥
॥ इति भट्टकेदारविरचिते वृत्तरत्नाकराख्ये छन्दसि विषमवृत्त-वर्णनो नाम पञ्चमोऽध्यायः ॥ ५ ॥ [ ग्रं० श्लो० १९ ]

---

9 d. -मिति गदितमुप० Ba, Su (b), -मिदमपरमुप० Wg. 10 a. युक्तं ( for युक्तौ ) Br. 10 b अंघ्रि ( for अंह्रि ) Ba, Br, Nr, Pa, Pb, Rm, Vs, Wa, Wc, Wg. -यतिस्तु व० Br, Nr, Wa, Wc; -यतीह व० Pa; -यतिश्च व० Sk 10 c. -मिह हि भवेत् Vs. 10 d. प्रवरमति० Wg; विततमति० Vs. लघु ( for खलु ) Pb, Wa, Wc, 11 a. -तृतीयके यदा त० Ba, Br, Nr, Pb, Wa, Wc 11 b. ब्रुवन्ति ( for वदन्ति Br, Nr, Pb, Rm, Vs, Wa, Wb, Wc, Wg. 11 d यदि dropped in Rm, Wg. 12 c. यच्छन्दसि नोक्तमत्र Rm

## ॥ षष्ठोऽध्यायः ॥

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ १ ॥
ऊने दद्याद् गुरूण्येव यावत्सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥ २ ॥
नष्टस्य यो भवेदङ्कस्तस्यार्धेऽर्धे समे च लः ।
विषमे चैकमाधाय तदर्धेऽर्धे गुरुर्भवेत् ॥ ३ ॥
उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान्समालिखेत् ।
लघुस्था ये च तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् ॥ ४ ॥
वर्णान्वृत्तभवान्सैकानौत्तराधर्यतः स्थितान् ।
एकादिक्रमशश्चैतानुपर्युपरि निक्षिपेत् ॥ ५ ॥
उपान्त्यतो निवर्तेत त्यजन्नेकैकमूर्ध्वतः ।
उपर्याद्याद् गुरोरेवमेकद्व्यादिलघुक्रिया ॥ ६ ॥
लघुक्रियाङ्कसंदोहे भवेत्संख्या विमिश्रिते ।
उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥ ७ ॥
संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः ।
वृत्तस्याङ्गुलिकीं व्याप्तिमधः कुर्यात्तथाङ्गुलम् ॥ ८ ॥

---

1. 1 प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया । संख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ Bb, Br, Nr, Pa, Pb, Rm, Vs. Ba and Jn give it after v. 8; the latter calls it a संग्रहश्लोक Su mss contain it but there is no trace of it in Sulhana's commentary

---

2 a. -गुरूनेव Bb, Br, Nr, Pa, Pb, Rm, Vs, Su (a), -गुरूनवं Bb, Ss, -गुरू-ण्येवं Sk, -गुरु चैव Sm. 3 c. मादाय (for माधाय) Vs. 3 d. स्यादर्धेऽर्धे० Nr; तस्यार्धेऽर्धे० Ba, Pa, Rm. 4 ab -नङ्कानुपर्याद्यात्० Rm. 4 c. तु (for च in the text) Ss, Vs. लघुस्थाने तु येऽङ्का स्युः Rm, लघुस्थास्तत्र ये चाङ्का Ba 5 c क्रमतः (for क्रमशः) Nr, Pb. 5 d. विन्यसेत् (for निक्षिपेत्) Pb 6 b त्यजेत् (for त्यजन्) Sm, Ss. 6 d. -लगक्रिया Ba, Bb, Nr, Pa, Rm, Vs, लघुक्रिया Sk, Su (a). 7 a. लगक्रिया० Ba, Bb Nr, Pa, Rm, Vs, लघु० Sk. 8 c -लिकी व्याप्तिरधः Nr, Pa, Rm. 8 d. -तथाङ्गुलिम् Nr, Pa, Rm, Vs.

वंशेऽभूत्कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता ।
विप्रः पव्वेकनामा विमलतरमतिः शैवतत्त्वावबोधे ॥
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्त-
श्छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् ॥ ९ ॥

॥ इति श्रीभट्टकेदारविरचिते वृत्तरत्नाकराख्ये छन्दसि षट्प्रत्ययवर्णनो नाम षष्ठोऽध्यायः ॥ ६ ॥ [ ग्रं० श्लो० १० अ० २० ]

सर्वग्रन्थाग्रम्- २१+३२. ८ + ४५ + ८. २६ + १९ + १०. २० = श्लो० १३६ अ० २२.

---

9 a काश्य० Ba. 9 b -वेदतत्त्वावबोधे ( धी Jn, Ss, धे: Ba ) Ba, Jn, Sd, Sk, Sm, Ss, Vs; वेदतत्त्वार्थबोधे ( धः Bb ) Bb, Nr, Pa, वेदशास्त्रार्थवेत्ता Pb; वेदशास्त्रावबोधी Rm

# अथ हेमचन्द्राचार्यकृतं छन्दोऽनुशासनम् ।

(Adhyayas IV-VII of this work are separately Published at Journal BBRAS 1943, 1944, together with the author's Tīkā and an Avacuri Here, I give a brief commentary on Adhyayas I-III only)

## प्रथमोऽध्यायः ।

वाचं ध्यात्वाऽऽर्हतीं सिद्ध-शब्द-काव्यानुशासनः ।
काव्योपयोगिनां वक्ष्ये छन्दसामनुशासनम् ॥ १ ॥

सर्वादिमध्यान्तग्लौ त्रिकौ म्नौ भ्यौ ज्रौ स्तौ वर्णगणाः ॥ १ ॥ द्वित्रिचतुष्पञ्चषट्कला दतचपषा द्वित्रिपञ्चाष्टत्रयोदशभेदा मात्रागणाः ॥२॥ समानेनैकादि ॥३॥ ह्रस्वो लृजुः ॥४॥ वान्ते ग्वक्रः ॥ ५ ॥ ≍क )( पविसर्गानुस्वारव्यञ्जनाह्रादिसंयोगे ॥६॥ दीर्घप्लुतौ ॥ ७ ॥ स द्विमात्रः ॥८॥ एदोतौ पदान्ते प्राकृते ह्रस्वौ वा ॥९॥ तुर्योऽशः पादोऽविशेषे ॥१०॥ वृत्तम् ॥११॥ समैः पादैः समम् ॥१२॥ समार्धेमर्धसमम् ॥ १३ ॥ अन्यद्विषमम् ॥ १४ ॥ श्रव्यो विरामो यतिः ॥ १५ ॥ त्र्यादिर्गादिः ॥ १६ ॥

इत्याचार्यश्रीहेमचन्द्रानुस्मृते छन्दोऽनुशासने संज्ञाध्यायः प्रथमः ॥

## द्वितीयोऽध्यायः ।

छन्दः ॥१॥ पादः ॥२॥ एकाक्षरोक्ता जातिः ॥३॥ अत्युक्ता-मध्या-प्रतिष्ठा-सुप्रतिष्ठा-गायत्री-उष्णिग्-अनुष्टुब्-बृहती-पङ्क्तिस्-त्रिष्टुब्- जगती- अतिजगती- शक्वरी- अतिशक्वरी- अष्टि-अत्यष्टि- धृति- अतिधृतय एकैकवृद्धाः ॥४॥ कृतिः प्राविसमभ्युदश्च

---

ग्लौ मादयो दादयश्च समानेन लक्षिता एकादिसंख्या भवन्ति । यावतिथः समानस्तावतिथा गादयोऽपि गृह्यन्ते । ग १ गा २ गि ३ गी ४ गु ५ गू ६ गृ ७ गॄ ८ ग्लृ ९ ग्लॄ १० । एवं लादयोऽपि ॥ ३ ॥ ह्रादिवर्जिते संयोगे च परे ह्रस्वोऽपि गो भवति वक्रश्च । अह्रादीति समस्तव्यस्तसंग्रहात् ह्रसंयोगे ह्रसंयोगे रसंयोगे च न गुरुः ॥ ६ ॥ सा च (यतिः) तृतीयान्तेषु गघादिनिर्देशेषू-पतिष्ठते । गाद्यवच्छिन्नैरक्षरैर्यतिः क्रियते इत्ययमर्थः सिध्यति ॥ १५ ॥ त्रिचतुरादिः संख्या क्रमेण गघङादिसंज्ञा ॥ १६ ॥

---

१ कृतिः प्राङ्विसमभ्युदश्च कृतिः P.

॥५॥ उक्ताया। गः श्रीः ॥६॥ अत्युक्तायां। गौ स्त्री ॥७॥ लौ मदः ॥८॥ ग्लौ दुःखम् ॥९॥ ल्गौ सुखम् ॥१०॥ २/४ ॥ मध्याया। मो नारी ॥११॥ यः केशा ॥१२॥ रो मृगी ॥१३॥ सो मदनः ॥ १४ ॥ ३/४ ॥ प्रतिष्ठाया। म्गौ कन्या ॥१५॥ भ्गौ सुमुखी ॥१६॥ ज्गौ विलासिनी ॥१७॥ गौं समृद्धिः ॥१८॥ न्गौ मृगवधूः ॥१९॥ य्गौ क्रीडा ॥२०॥ स्गौ सुमतिः ॥२१॥ त्गौ सोमप्रिया ॥२२॥ ४/८ ॥ सुप्रतिष्ठाया। रो गौ प्रीतिः ॥२३॥ स्गौ विदग्धकः ॥२४॥ भो गौ पङ्क्तिः ॥२५॥ भ्लगा रतिः ॥२६॥ जो गौ सती ॥२७॥ त्लगा नन्दा ॥२८॥ ग्लगा जया ॥२९॥ म्लगाः सावित्री ॥३०॥ रो गौ घनपङ्क्तिः ॥३१॥ न्लगा अभिमुखी ॥३२॥ ५/१० ॥ गायत्र्या। मौ सावित्री ॥३३॥ म्रौ तटी ॥३४॥ सौ रमणी ॥३५॥ त्यौ तनुमध्या ॥ ३६ ॥ स्मौ गुरुमध्या ॥३७॥ यौ सोमराजी ॥३८॥ न्यौ शशिवदना ॥३९॥ मौं मालिनी ॥ ४० ॥ भ्यौ कामलतिका ॥ ४१ ॥ म्लौ मुकुलम् ॥४२॥ त्रौ शफरिका ॥४३॥ नौं कच्छपी ॥४४॥ भ्रौ लघुमालिनी ॥४५॥ स्यौ विमला ॥४६॥ त्रौ जला ॥४७॥ म्यौ सुनन्दा ॥४८॥ भ्मौ विक्रान्ता ॥४९॥ स्मौ सूचीमुखी ॥५०॥ म्यौ शिखण्डिनी ॥५१॥ ६/१९ ॥ उष्णिहि। नौं गा गान्धर्वी ॥५२॥ जौं ग उष्णिक् ॥५३॥ भ्नौ गः कुमारललिता ॥५४॥ म्लौ गो मदलेखा ॥५५॥ सौं ग उद्धता ॥५६॥ स्सौ गो भ्रमरमाला ॥५७॥ रौ गो हंसमाला ॥५८॥ भौ गः कलिका ॥५९॥ म्जौ गो विधुवक्त्रा ॥६०॥ स्मौ

---

स्त्री। पद्ममित्येके ॥ ७ ॥ मदः। पुष्पमिति कश्चित् ॥८॥ केशा। धूरिति भरतः ॥ १२ ॥ मृगी। तडिदिति भरतः ॥ १३ ॥ मदनः। रजनीति भरतः ॥१४॥ सुमुखी। ललितेति भरतः ॥१६॥ विलासिनी। जयेति भरतः ॥ १७ ॥ समृद्धिः। पुण्य(ष्प ?)मिति भरतः ॥१८॥ सुमतिः। भ्रमरीति भरतः ॥२१॥ विदग्धकः। चातुरेति भरतः ॥ २४ ॥ पङ्क्तिः। अक्षरोपपदेत्यन्ये। कुन्तलतन्वीति भरतः ॥ २५ ॥ सती। गिरेति भरतः ॥ २७ ॥ अभिमुखी। मृगचपलेत्यन्यः। कमलमुखीति भरतः ॥ ३२ ॥ रमणी। नलिनीति भरतः ॥ ३५ ॥ शशिवदना। मुकुलितेत्यन्यः। मकरशीर्षेति भरतः ॥ ३९ ॥ मुकुलम्। वीथीति भरतः ॥ ४२ ॥ शफरिका। गिरेति भरतः ॥ ४३ ॥ उष्णिक्। शिखेति भरतः ॥ ५३ ॥ कलिका। सोपानमित्यन्यः। भोगवतीति भरतः ॥ ५९ ॥

गः सरलम् ॥६१॥ भ्नौ गश्चित्रम् ॥६२॥ नौ गो हरिविलसितम् ॥६३॥ भ्जौ गः शारदी ॥६४॥ त्नगा मधुकरिका ॥६५॥ रजौ गो विमला ॥६६॥ क्षौ गः सुभद्रा ॥६७॥ न्यौ गः कुमुद्वती ॥६८॥ यसौ गो मुदिता ॥६९॥ त्रौ गो मनोज्ञा ॥७०॥ स्त्रौ गो दीप्ता ॥ ७१ ॥ ७/२० ॥ अनुष्टुभि। त्रौ गौ विभा ॥७२॥ यौँ लावनुष्टुप् ॥ ७३ ॥ गीर्गीर्विद्युन्माला ॥७४॥ भौ गौ चित्रपदा ॥७५॥ त्रौ लगौ सुमालती ॥७६॥ भ्तौ लगौ माणवकं घैः ॥७७॥ त्रौ लगौ नाराचम् ॥७८॥ म्नौ गौ हंसरुतम् ॥७९॥ न्जौ लगौ ललितगतिः ॥८०॥ जौ गौ सिंहलेखा ॥८१॥ क्षौ लगौ प्रमाणी ॥८२॥ जौ ग्लौ समानी ॥८३॥ न्सौ गौ गुणलयनी ॥८४॥ सौ लगौ मही ॥८५॥ नौ गौ रतिमाला ॥८६॥ अन्यद्वितानम् ॥८७॥ ८/१६ ॥ बृहत्या। मो मौ वक्त्र डैः ॥८८॥ नो रौ बृहतिका ॥८९॥ नसा हलमुखी ॥९०॥ नौ मो भुजगशिशुसृता ॥९१॥ भजसा उदयम् ॥९२॥ भौ र उत्सुकम् ॥९३॥ नेरा भद्रिका ॥९४॥ नौ र उपच्युतम् ॥९५॥ रजसा अक्षि ॥९६॥ मः सौ कनकम् ॥९७॥ सौ मस्तारम् ॥९८॥ म्निः सौम्या ॥९९॥ तभ्या रुचिरा ॥१००॥ नस्या विशाला ॥१०१॥ तन्मा मकरलता ॥ १०२ ॥ नज्याः शशिलेखा ॥१०३॥ नौ सो लघुमणिगुणनिकर. ॥ १०४ ॥ मभ्साः सिंहाक्रान्ता ॥१०५॥ रज्राः कामिनी ॥१०६॥ ९/१९ ॥ पङ्क्तौ। मभसगा मत्ता चै. ॥१०७॥ थेज्गाः पङ्क्तिका ॥१०८॥ मस्जगाः शुद्धविराट् ॥१०९॥ मन्यंगाः पणवो डैः ॥११०॥ रजगा मयूरसारिणी ॥१११॥ नज्जगास्त्वरितमतिः ॥११२॥ भ्मसगा रुक्मवती ॥ ११६ ॥

हरिविलसितम्। चपलेत्यन्ये। द्रुतगतिरिति भरतः ॥ ६३ ॥ मधुकरिका। वज्रमित्यन्यः ॥ ६५ ॥ चैरिति त्र्यादिर्गादिरिति वचनाच्चतुर्भिरिति लभ्यते ॥ ७७ ॥ प्रमाणी। मत्तचेष्टितमिति भरतः ॥ ८२ ॥ वितानम्। उक्ताद्वक्ष्यमाणाच्चान्यत्समवृत्तं छन्दो वितानसंज्ञम् ॥ ८७ ॥ डैरिति पञ्चभिर्यतिः ॥ ८८ ॥ भुजगशिशुसृता। मधुकरिकेति भरतः ॥ ९१ ॥ कामिनी। तरंगवतीत्यन्यः ॥ १०६ ॥ मत्ता। इय च यद्यपि वानवासिकायामन्तर्भवति तथापि विशेषसंज्ञार्थमुक्ता। एव मन्यत्रापि ॥ १०७ ॥ पणवः। कुवलयमालेति भरतः। केचित्तु यगणस्थाने सगण मन्यन्ते ॥ ११० ॥ रुक्मवती। चम्पकमाला सुभावेति चान्ये। पुष्पस-

१. म्यगा. A.

भिगौ चित्रगतिः ॥ ११४ ॥ निगौ निलया ॥ ११५ ॥ जिगावुषिता ॥११६॥ रः सौ गो मणिरङ्गः ॥११७॥ भ्नौ म्गौ बन्धूकम् ॥ ११८ ॥ भ्रज्गा मनोरमा ॥ ११९ ॥ तो जौ ग उपस्थिता ॥ १२० ॥ र्मसगाः कलिका ॥१२१॥ भत्लगा मृगचपला ॥१२२॥ मो नौ गः कुमुदिनी ॥ १२३॥ मः सौ ग उद्धतम् ॥१२४॥ नज्यगा विपुलभुजा ॥१२५॥ स्जसगा माला ॥१२६॥ १०/२० । त्रिष्टुभि । भौ रो गौ रोचकम् ॥ १२७ ॥ रः सौ लगावच्युतम् ॥ १२८ ॥ तिगौं लयग्राहि ॥ १२९ ॥ भिगौं दोधकम् ॥१३०॥ सिलगा विदुषी ॥ १३१ ॥ भत्ना गौ श्रीर्डैः ॥ १३२ ॥ तौ जौ गावुपस्थिता ॥१३३॥ जस्ता गावुपस्थितम् ॥ १३४ ॥ मौत्तौ गौ शालिनी चैः ॥१३५॥ मभता गौ वातोर्मी ॥१३६॥ मो भौ गौ वा ॥१३७॥ मभ्नलगा भ्रमरविलसितम् ॥१३८॥ नौ सो गौ वृन्ता ॥१३९॥ न्यभा गौ पतिता चैः ॥१४०॥ नैरलगा रथोद्धता ॥ १४१ ॥ नैभा गौ स्वागता ॥ १४२ ॥ नौ रलगा भद्रिका ॥ १४३ ॥ रज्रलगाः श्येनी ॥१४४॥ नो जौ लगौ सुमुखी ॥१४५॥ मस्जा गावेकरूपम् ॥ १४६ ॥ तो जौ लगौ मोटनकम् ॥१४७॥ तभजलगा उत्थापनी ॥१४८॥ तो नौ लगौ मुखचपला ॥१४९॥ न्यनलगाः कमलदलाक्षी ॥ १५० ॥ सनलगा विमला ॥ १५१ ॥ नस्ना गावशोका ॥ १५२ ॥ सज्या लगौ सारणी ॥१५३॥ तौ जो गाविन्द्रवज्रा ॥१५४॥ जतजा गावुपेन्द्रवज्रा ॥१५५॥ एतयोः परयोश्च सङ्कर उपजातिश्चतुर्दशधा ॥ १५६ ॥ सर्वजातीनाम-

---

मृद्धिरिति भरतः ॥ ११३ ॥ मणिरङ्गः । (उदाहरणे मणिरागः । cf VR. 3, 28. 7) ॥११७॥ कुमुदिनी । कुसुमसमुदितेत्यन्ये ॥ १२३ ॥ माला । प्रमितेत्यन्ये ॥ १२६ ॥ दोधकम् । उपचित्रेयम् ॥१३०॥ श्रीः । सान्द्रपदमित्यन्ये । रुचिरेति भरतः । यतिनियमाभावे इदमेव प्रत्यवबोधः ॥ १३२ ॥ चैरिति वर्तते १३६-१३९॥ भ्रमरविलसितम् । वानवासिकेयम् ॥१३८॥ रथोद्धता । अपरान्तिकेयम् ॥१४१॥ भद्रिका । अपरवक्त्रमिति भरतः । उत्तरान्तिकेयम् ॥१४३॥ श्येनी । निःश्रेणिकेत्यन्ये ॥१४४॥ सुमुखी । द्रुतपादगतिरिति भरतः ॥१४५॥ कमलदलाक्षी । रुचिरमुखीति भरतः ॥ १५० ॥ परयोः इन्द्रवंशावंशस्थयोः ॥ १५६ ॥ सर्वजातीनामुक्तादीना, प्रायो गायत्र्यादीनाम्, इतः परासा

---

१ मस्तौ P. ( मस्तद्वय गुरुद्वयं च com. )

पीति वृद्धाः ॥ १५७ ॥ ११/३१ ॥ जगत्या। तौ ज्गाविन्द्रवंशा ॥ १५८ ॥ जतज्रा वंशस्थम् ॥१५९॥ नभज्याः कलहंसा ॥१६०॥ नभसाश्चन्द्रवर्त्म ॥१६१॥ सीस्तोटकम् ॥ १६२ ॥ नभभ्रा द्रुतविलम्बितम् ॥ १६३ ॥ नौ म्यौ पुटो जैः ॥ १६४ ॥ नौ म्रौ ततम् ॥ १६५ ॥ नौ भ्रावुज्ज्वला ॥ १६६ ॥ तीः कामावतार. ॥ १६७ ॥ न्यौ न्यौ कुसुमविचित्रा ॥ १६८ ॥ ज्सज्सा जलोद्धतगतिश्छैः ॥ १६९ ॥ यीर्भुजङ्गप्रयातम् ॥ १७० ॥ रीः स्रग्विणी ॥ १७१ ॥ जीर्मौक्तिकदाम ॥ १७२ ॥ मीः कल्याणम् ॥ १७३ ॥ नाद्रज्राः प्रियंवदा ॥ १७४ ॥ म्ताल्ललिता ॥ १७५ ॥ स्जौ सौ प्रमिताक्षरा ॥ १७६ ॥ मौ यौ वैश्वदेवी डैः ॥ १७७ ॥ म्भौ स्मौ जलधरमाला चैः ॥ १७८ ॥ न्जौ भ्यौ नवमालिनी जैः ॥ १७९ ॥ न्जौ ज्रौ मालती ॥ १८० ॥ नौ रौ प्रमुदितवदना ॥ १८१ ॥ सा प्रभा छैः ॥ १८२ ॥ न्जज्यास्तामरसम् ॥ १८३ ॥ न्रज्रा विभावरी ॥ १८४ ॥ येन्याः कुमुदिनी ॥ १८५ ॥ भ्तौ न्सौ ललना डैः ॥ १८६ ॥ नौ यौं कामदत्ता ॥ १८७ ॥ नो रिर्मेघावली ॥ १८८ ॥ त्यौ त्यौ पुष्पविचित्रा

जगत्यादीना कृतनामाकृतनामविसदृशप्रस्ताररूपस्वस्वपादाना स्वल्पभेदाना सङ्करः उपजातिरिति वहुश्रुताः प्राहुः ॥ १५७ ॥ वंशस्थम् । वंसन्तमञ्जरी, अवभ्रंशा चेत्यन्ये ॥१५९॥ कलहंसा । द्रुतपदा, मुखर चेत्यन्ये ॥१६०॥ तोटकम् । मात्रासमकमिदम् ॥१६२॥ द्रुतविलम्बितम् । हरिणप्लुतमिति भरतः ॥ १६३ ॥ उज्ज्वला । चपलनेत्रेत्येके ॥१६६॥ कुसुमविचित्रा । इय मदनविकारा, गजलुलित वान्येषाम् ॥ १६८ ॥ भुजगप्रयातम् । अप्रमेयेति भरतः ॥ १७० ॥ स्रग्विणी । पद्मिनीति भरतः ॥ १७१ ॥ कल्याणम् । काञ्चनमिदमिति कश्चित् ॥१७३॥ प्रियंवदा । मत्तकोकिलमित्यन्ये ॥१७४॥ प्रमिताक्षरा । चित्रेयम् ॥१७६॥ वैश्वदेवी । चन्द्रकान्तेत्यन्ये ॥१७७॥ जलधरमाला । कान्तोत्पीडेत्यन्ये ॥ १७८ ॥ मालती । वरतनुरित्यन्ये ॥ १८० ॥ प्रमुदितवदना । चञ्चलाक्षीत्यन्ये । गौरीत्यपरे ॥१८१॥ तामरसम् । कमलविलासिनीत्यन्ये ॥ १८३ ॥ विभावरी । वसन्तचत्वरमित्यन्ये ॥ १८४ ॥ मेघावली । वसन्तेति कश्चित ॥

१ वृद्धाः प्राहु. A.

